# एकैव मूर्तिः

एकैव मूर्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम्।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधा तयोस्तावपि धातुराद्यौ॥

– कालिदासः (कु.सं.-७-४४)

"देवः एकः एव। किन्तु त्रिधा औपचारिकभेदः दृश्यते। तेषु ज्येष्ठकनिष्ठभावः न वास्तविकः। इच्छया सर्वे ज्येष्ठाः कनिष्ठाः च भवन्ति। कदाचित् विष्णोरपेक्षया हरः श्रेष्ठः। पुनः कदाचित् हरस्य अपेक्षया विष्णुः श्रेष्ठः। अन्यदा कदाचित् हरिहरयोः ब्रह्मा आद्यः। पुनरन्यदा ब्रह्मणः हरिहरौ आद्यौ। त्रिमूर्तिषु वास्तविकः भेदः तु नास्ति एव।"

हिमवान् मृन्मयः पर्वताकारः, सागरश्च जलमयः इत्यादीन् विषयान् वयं जानीमः एव। यतः एते इन्द्रियगोचराः विषयाः। एतेषाम् एव करचरणादिमत्वं, पत्नीपुत्रयुक्तत्वं, सञ्चारयोग्यत्वम् अपि वर्णयामः वयम्। केनचित् वर्णितं चेत् श्रद्धया तादृशं रूपम् अङ्गीकृत्य वर्णयितुः तात्पर्यम् अवगच्छामः। तर्हि वास्तविकं तत्त्वं किम्? करचरणादिमत्वम्, उत तद्रहितत्वम्? कथादिषु व्याघ्र-सिंह-शशादयः सम्भाषणं कुर्वन्ति। किन्तु लोके तथा अस्ति किम्?

एवं वस्तुतत्त्वं भिन्नम् एव भवति। भावजागरणार्थं श्रद्धावर्धनार्थम्, उपादेयत्वप्रतिपादनार्थं च कल्पनांशस्य मिश्रणं क्रियते। एतावता वस्तुतत्त्वस्य स्वरूपस्य न क्वापि च्युतिः। सामान्याः (पामराः) कल्पनांशयुक्ताभिः कथाभिः एव रममाणाः तृप्तिं प्राप्नुवन्ति। पण्डिताः तु वस्तुतत्त्वं जानन्तः कथासु तटस्थाः भवन्ति।

वेदाः वदन्ति– 'एकं सत्' इति। देवः निर्गुणः निराकारः अनादिः च। निराकारं तत्त्वम् अवगन्तुं पामराः न शक्नुवन्ति इत्यतः भेदकल्पना कृता। कथाः कल्पिताः। कथासु यदा परमार्थबुद्धिः तदा एव विवादः। तत्त्वं ज्ञातं चेत् नास्त्येव वादः।


भोः ! पश्य अस्मिन् पाषाणखण्डे नरमुण्डं तिर्यग्-रेखाम्बी च ।
अथान्तरे तु प्रवन्नश्रुवते यथा प्राक्तनभूपाला विजिताश्च तां परितः सञ्चरन्ति ।
अहो, कथं शान्तं विशदं च लक्ष्यते ।
परं कुरणमिव अधोपनायल इव शान्ता कृता ?
THAK THAK
THAK
TONY S
पुनः मते
आः...
भोः इतिहासं प्रतिहन्यसे त्वम् , अस्माकं शिक्षां विलपयसि ।
TONY S
अपराधोऽयम् , पश्य कथं दण्डयसे !
तव वाहनाङ्कः लिखितोऽस्माभिः । आरक्षिणे ज्ञापयिष्यामः
लज्जिताः वयम् । अतिगर्हणीयमिदं कार्यम् ।
कृपया क्षम्यताम् । न पुनः कदापि एवमाचरिष्यामः
न केवलं 'न कदापि पुनः', त्वया तु अन्येऽपि जनाः एवंविधनिन्द्यकार्यात् वारणीयाः ।
रक्षिष्यामः, रक्षिष्यामः
सुन्दरं भारतं स्वकीयम्
त्वयापि मूर्खाणां अविचारितकार्यैः नश्यमानं पर्यावरणं रक्षणीयम् । वयं सम्मिल्य प्रयतिष्यामहे चेत्तर्हि भारतस्य सौन्दर्यं अक्षुण्णं स्थास्यति ।

# चन्दमामा

जनवरी-१९९०

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

१७८९ तमे वर्षे कालिदासस्य 'अभिज्ञानशाकुन्तलम्' आंग्लभाषया विलियं जोन्स्वर्येण अनूदितम्, योऽयं कलकत्तास्थस्य उच्चन्यायालयस्य न्यायाधीशः आसीत्। एतस्मात् विदेशीयानां भावनायां महत् परिवर्तनं जातम्। ततः पूर्वं विदेशीयाः भावयन्तः आसन् यत् भारतम् अन्धश्रद्धानाम् अनागरिकाणां च देशः इति। एतस्य अनुवादस्य प्रकाशनस्य अनन्तरं तु विदेशीयाः बहवः विद्वांसः भारतीयसंस्कृतौ, संस्कृते, जीवनदृष्टौ च आसक्ताः जाताः। बहवः आसक्त्या संस्कृतं पठितवन्तः। भारतविषये स्थितः अनादरः अन्यथाभावः च वायुना अपसार्यमाणः मेघः इव दूरङ्गतः। भारतीयसंस्कृतौ, संस्कृते च विशेषादरः सर्वत्र सर्वैः प्रदर्शितः। बहवः पाश्चात्यविद्वांसः संशोधनेन संस्कृतस्थं ज्ञानराशिं प्राकाश्यं नीतवन्तः। इंग्लीषु, जर्मन्, फ्रेञ्च् इत्यादिषु भाषासु संस्कृतनाटकानाम्, उपनिषदां, गीतायाः, पुराणानां च अनुवादाः प्रकाशिताः। ऋषीणां यत् चिन्तनम् आसीत् तस्य मौल्यं सर्वैः ज्ञातम्। एवम् अन्ताराष्ट्रियस्तरे या बौद्धिकजागृतिः जाता तस्याः मूलं कारणं जोन्स्वर्येण कृतः शाकुन्तलस्य आंग्लानुवादः। द्विशतात् वर्षेभ्यः पूर्वम् एषा ऐतिहासिकी घटना सञ्जाता।

सम्पुटः–६ जनवरी–१९९० सञ्चिका–१०

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

A CHANDAMAMA PUBLICATION

रसप्रश्नाः–

# रामलक्ष्मणयोः मूर्च्छा

(रामपक्ष-रावणपक्षयोः युद्धम् आरब्धम्। पक्षद्वये अपि महान् युद्धोत्साहः। इन्द्रजित् रणरङ्गं प्रविष्टवान्। किन्तु तेन पराजयः प्राप्तः। एतेन क्रुद्धः सः अन्तर्हितः सन् सर्पास्त्रप्रयोगेण रामलक्ष्मणौ मूर्च्छितौ कृतवान्। एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। उत्तररूपेण विकल्पत्रयं सूचितम् चापि। युक्तम् उत्तरं जानन्तु।)

१. क्रुद्धः इन्द्रजित् अन्तर्हितः सन् सर्पास्त्रेण रामलक्ष्मणौ बद्धवान्। तस्य क्रोधस्य कारणं किम्?
   (अ) सः अङ्गदेन पराजितः आसीत् इत्यतः।
   (आ) सः रामेण पराजितः आसीत् इत्यतः।
   (इ) सः हनूमता पराजितः आसीत् इत्यतः।

२. अन्तर्धानं प्राप्तुं सामर्थ्यं तेन कस्य अनुग्रहात् प्राप्तम् आसीत्?
   (अ) शिवस्य। (आ) विष्णोः। (इ) ब्रह्मणः।

३. रामलक्ष्मणौ मूर्च्छां गतवन्तौ आस्तां खलु? तयोः कतरः प्रथमं सचेतनः जातः?
   (अ) रामः। (आ) लक्ष्मणः। (इ) उभौ अपि युगपत् एव।

४. औषधमूलानि आनीतानि चेत् सर्पास्त्रबन्धनम् अपनेतुं शक्येत इति कः सूचितवान्?
   (अ) सुग्रीवः। (आ) सुषेणः। (इ) जाम्बवान्।

5. सर्पास्त्रबन्धनं कः अपनीतवान्?
   (अ) गरुडः। (आ) इन्द्रः। (इ) सञ्जीविनीसस्यम्।

उत्तराणि–

I-(अ). II-(इ). III-(अ). IV-(आ). V-(अ).



Neptune

# नीलग्रहं प्रति वायेजर् – २

भूमिः इव आकाशे सूर्यः, बुधः, गुरुः, शुक्रः, शनिः, कुजः, युरेनस्, नेप्चून्, प्लूटो इत्येते ग्रहाः उपग्रहाः चापि परिभ्रमन्ति। एतं समूहं सौरव्यूहं कथयन्ति। सौरव्यूहस्य केन्द्रस्थाने सूर्यः अस्ति इति सर्वे जानन्ति एव।

मानवः प्राचीनकालात् अपि अन्यग्रहाणां तत्त्वम् आन्तर्यं च ज्ञातुं प्रयतमानः एव अस्ति। एषः प्रयत्नः

इदानीम् अपि निरन्तरं प्रचलति। अन्तरिक्षं प्रति अनेकाः क्षेपण्यः मानवेन प्रेषिताः। नेप्चूनुग्रहस्य विशेषान् ज्ञातुम् अमेरिकादेशेन वायेजर्-२ प्रेषितम् आसीत्। तेन नेप्चूनुग्रहसम्बन्धिनः बहवः नूतनाः अंशाः भूमिं प्रति प्रेषिताः।

१९७७ तमें वर्षे अगस्ट्मासे विंशतितमे दिनाङ्के वायेजर्-२ यानं गगनाङ्गणं प्रति प्रेषितम् आसीत्। द्वादश वर्षाणि यावत् प्रयाणेन ४.४३ लक्षकोटि (बिलियन्) मैल् दूरम् अतिक्रम्य तेन यानेन नेप्चूनुग्रहस्य सीमा प्राप्ता। सूर्यतः २८० कोटिमैल्दूरे स्थितः अयं ग्रहः नीलवर्णेन शोभते इति श्रूयते। एतं ग्रहं परितः पञ्च वलयाः सन्ति इति, तेषु त्रयः क्षीणाः इति च



Earth



Saturn



Mercury



Sun

वायेजर्यानेन प्रेषितेभ्यः छायाचित्रेभ्यः ज्ञायते। एतस्मिन् ग्रहे प्रतिघण्टं ४०० मैल्वेगेन झञ्झावातः वाति इति ज्ञायते।

नेप्चूनुग्रहं परितः ८ उपग्रहाः भ्रमन्ति। तेषु 'ट्रेटान्' नामकः उपग्रहः चन्द्रस्य अपेक्षया अपि आकारेण अल्पः सन् रमणीयतया दृश्यते इति ज्ञायते। एतस्य अन्तः सदा मिहिका भवति इति तर्क्यते। वायेजर्-२ यानेन प्रेषितानां छायाचित्राणाम् आधारेण नेप्चूनुग्रहविषये इतोऽप्यधिकान् नूतनान् अंशान् ज्ञातुं प्रयतमानाः सन्ति विज्ञानिनः।



# अत्याशा

अङ्गनापुरे पूर्वं भूपालः नाम कृषिकः आसीत्। तस्य एकमात्रपुत्रः गजपतिः। गजपतिः कृषिविषये सदापि अनासक्तः भवति स्म। एतेन भूपालः नितरां व्यथितः भवति।

स्वस्य अन्तिमकालः यदा सन्निहितः तदा भूपालः स्वपुत्रं गजपतिं, तदीयं मातुलं नागराजं च स्वसमीपम् आहूय एकं रहस्यविषयम् उक्तवान्। रहस्यं च एवम्- गजपतिः पितुः ऐश्वर्यं भोक्तुं केवलम् अर्हति, न तु विक्रेतुम्। एवं मृत्युपत्रं सज्जीकृतम् अस्ति इति।

एतदनन्तरम् अचिरात् एव भूपालः दिवं गतः। अनन्तरं वर्षद्वयं यावत् क्षेत्रे उत्तमं फलं न प्रवृद्धम्। तदनन्तरवर्षे वायोः वृष्ट्याः च आधिक्यम् आसीत्। वायोराधिक्यात् क्षेत्रे हानिः जाता चेत् वृष्टिकारणतः गोसम्पत्तिः प्रवाहेण नीता। बीजार्थं रक्षितं धान्यं नष्टम् अभवत्। अग्रे कृषिः कथम् इति अजानन् गजपतिः मातुलस्य नागराजस्य गृहं गत्वा स्वकीयं कष्टं निवेदितवान्। किञ्चित् ऋणं प्रार्थितवान् च।

तदा नागराजः– "भोः, एतस्मिन् काले कृषितः किमपि प्रयोजनं न सिध्यति। काले वृष्टिः न भवति। व्ययानुगुणम् आयः अपि न प्राप्यते। अतः कृषेः अपेक्षया अपि वाणिज्यम् एव वरम् इति अहं भावयामि। वाणिज्यतः तु लक्षशः रूप्यकाणि सम्पादयितुं शक्यानि" इति सूचितवान्।

"तत् तु समीचीनम् एव। किन्तु वाणिज्यार्थं मूलधनम् आवश्यकं भवति खलु? तस्य प्राप्तिः कथम्?" इति पृष्टवान् गजपतिः।

"किमर्थं तावती चिन्ता? किं धनवन्तः केवलं वाणिज्यस्य आरम्भं कुर्वन्ति? न खलु? बहवः स्वस्य धनस्य अभावे अपि ऋणं



स्वीकृत्य वाणिज्यस्य आरम्भं कुर्वन्ति'' इति उक्तवान् नागराजः।

''ऋणस्वीकरणं तु सुलभम्। किन्तु प्रत्यर्पणं कथम्? मम तु वाणिज्ये न विशेषानुभवः। स्वकीयं धनं चेत् तावती चिन्ता न भवेत्। ऋणरूपेण स्वीकृत्य हानिः अनुभूता चेत् कष्टम् एव खलु?'' इति आतङ्कं प्रकटितवान् गजपतिः।

''ऋणप्रत्यर्पणं न कृतं चेत् किं भवेत्?'' इति हसन् पृष्टवान् नागराजः।

''ऋणं न प्रत्यर्पितं चेत् ऋणदातारः मौनं तिष्ठेयुः वा?'' इति पृष्टवान् गजपतिः।

''किं कर्तुं शक्नुयुः ते? भवतः भूम्याः आधारेण तैः ऋणं दीयते। भूमेः विक्रयणस्य अधिकारः भवतः नास्ति खलु? अतः ते ऋणदातारः 'भूमिं स्वायत्तीकर्तुं न अर्हन्ति'' इति उक्तवान् नागराजः।

नागराजेन यः वञ्चनामार्गः सूचितः सः गजपतये अपि अरोचत।

अनन्तरं मासाभ्यन्तरे गजपतिः स्वग्रामस्य धनिकतः अन्येभ्यः धनिकेभ्यः च लक्षं रूप्यकाणि ऋणरूपेण स्वीकृत्य वाणिज्यम् आरब्धवान्। गजपतिः ग्रामे कृषिकेभ्यः धान्यं स्वीकृत्य शकटेन नगरं नीत्वा तत्र तत् विक्रीणीते। नगरतः ग्रामोपयोगीनि तिन्त्रिणीतैलादीनि आनीय ग्रामे विक्रीणीते। वाणिज्ये तस्य विशेषानुभवः नास्ति चेदपि दैवानुग्रहात् तेन वाणिज्यात् विशेषलाभः प्राप्तः एव। ऋणसम्बन्धिवृद्धेः दानस्य अनन्तरम् अपि तस्य हस्ते दशसहस्रं रूप्यकाणि अवशिष्टानि।

इदानीं गजपतेः मनसि दुर्भावना उत्पन्ना। 'वाणिज्यतः प्रतिवर्षं दशसहस्रं रूप्यकाणि प्राप्यन्ते चेदपि ऋणं समग्रं प्रत्यर्पयितुं दश वर्षाणि आवश्यकानि भवन्ति। अनन्तरम् अपि प्रतिवर्षं दशसहस्रं रूप्यकाणि लाभरूपेण प्राप्तानि चेत् दशसु वर्षेषु लक्षं रूप्यकाणि सञ्चितानि भवेयुः। एवं च लक्षाधिपतित्वं प्राप्तव्यं चेत् विंशतिं वर्षाणि प्रतीक्षणीयम्। एतदपेक्षया ऋणदातॄन् वञ्चयामि चेत् शीघ्रम् एव लक्षाधिपतिः भवेयम्। वाणिज्ये हानिः अभवत् इति ऋणदातॄन् वदामि। ऋणदातारः मत्तः भूमिं

स्वीकर्तुं तु न अर्हन्ति। यतः भूमेः विक्रयणाधिकारः मम नास्ति' इति आलोचितवान् गजपतिः।

अतः सः दशसहस्रं रूप्यकाणि मातुलस्य नागराजस्य हस्ते दत्तवान्। वाणिज्ये महती हानिः अनुभूता इति ग्रामीणान् ऋणदातॄन् च उक्तवान्। एतत् श्रुत्वा ऋणदातारः झटिति गजपतेः भूमेः स्वायत्तीकरणार्थं प्रयत्नं कृतवन्तः। तदा तैः ज्ञातं यत् भूमेः विक्रयणाधिकारः गजपतेः नास्ति इति। अतः अनन्यगतिकाः ते भूस्वामिनं रामनारायणं प्रवृत्तं सर्वं निवेदितवन्तः।

भूस्वामी रामनारायणः विवादपरिहारे नितरां निपुणः। यदा ऋणदातारः गजपतेः वञ्चनां श्रावितवन्तः तदा भूस्वामी स्वसेवकानां द्वारा गजपतेः वाणिज्यविषये विषयान् सङ्गृहीतवान्। एतेन सः ज्ञातवान् यत् गजपतिः वाणिज्ये लाभं सम्पादितवान् अस्ति इति।

अनन्तरं सः गजपतिम् ऋणदातॄन् च स्वसमीपम् आहूय सर्वेषां सम्मुखं गजपतिं पृष्टवान्– "भवान् एतेभ्यः ऋणं स्वीकृतवान् इत्येतत् सत्यं वा?" इति।

"आं श्रीमन्! ऋणसम्बन्धि व्यवहारपत्रं तेषां समीपे अस्ति एव" इति उक्तवान् गजपतिः।

"भवता वाणिज्ये हानिः अनुभूता वा?" इति पृष्टवान् भूस्वामी।



"आम्। अनुभवराहित्यात् महती हानिः अनुभूता श्रीमन्" इति कृत्रिमं खेदं प्रकटयन् उक्तवान् गजपतिः।

"पित्रार्जिता सम्पत्तिः अस्ति इति किल धैर्येण भवान् ऋणं स्वीकृतवान्?" इति पृष्टवान् भूस्वामी।

"आं श्रीमन्" इति उक्तवान् गजपतिः।

"तर्हि पित्रार्जितां सम्पत्तिं विक्रीय ऋणं प्रत्यर्पयतु तावत्" इति सूचितवान् भूस्वामी।

तदा गजपतिः– "श्रीमन्! मम पिता स्वस्य मृत्युपत्रे लिखितवान् अस्ति यत् अहं पित्रार्जितां भूमिं विक्रेतुं न अर्हामि इति। तस्याः अनुभोगार्थं केवलं मम अधिकारः अस्ति, न तु विक्रयणार्थम्। अतः भूमिं विक्रेतुं न अर्हामि अहम्" इति वदन् पितुः मृत्युपत्रं

प्रदर्शितवान्।

भूस्वामी रामनारायणः तत् पत्रं दृष्ट्वा प्रत्यर्प्य– "भवतः वचनं सत्यम् एव। पित्रार्जितसम्पत्तेः विक्रयणं कर्तुं भवान् न अर्हति इति तत्र स्पष्टम् उल्लिखितम् अस्ति। किन्तु तां सम्पत्तिं भवान् भाटकार्थं तु दातुम् अर्हति एव। अतः एतां भूमिं भाटकार्थं शतं वर्षाणि यावत् ऋणदातृभ्यः ददातु। भवदनन्तरीयाः तां भूमिं तेभ्यः प्रतिप्राप्स्यन्ति" इति निर्णयं श्रावितवान् भूस्वामी।

तदा दिग्भ्रान्तः गजपतिः– "किम् एतत् श्रीमन्! मम भूमिः दशलक्षाधिकं मूल्यम् अर्हति। तादृशीं भूमिम् ऋणदातृभ्यः शतं वर्षाणि उपभोक्तुं कथं दद्याम्? किम् एवम् आदेशः न्याय्यः? कृपया पुनः परिशीलयतु" इति दैन्येन प्रार्थितवान्।

तदा भूस्वामी कोपेन पृष्टवान्– "एवं तर्हि लक्षं रूप्यकाणि ऋणदातृभ्यः अयच्छन् भवान् तान् यत् वञ्चयति तत् किं न्याय्यम्? 'भूमिविक्रयणस्य अधिकारः मम नास्ति इत्यतः मम भूमिं कोऽपि वशीकर्तुं न अर्हति' इति भावयन् भवान् एवं योजनां कृतवान् अस्ति। सत्यं खलु? एषा योजना स्वमत्या कृता, उत अन्येन सूचिता? अन्येन सूचिता चेत् सः कः?" इति।

गजपतिः गद्गदस्वरेण– "मम मातुलेन एषा योजना सूचिता" इति वदन् प्रवृत्तं समग्रं निवेदितवान्।

तदा भूस्वामी नागराजम् आनाय्य उक्तवान्– "भोः, ज्येष्ठः भवान् भागिनेयं कुटिलोपायं बोधयन् तं वञ्चनार्थं प्रेरयन् अस्ति खलु? गजपतये ये ऋणं दत्तवन्तः तेभ्यः धनं भवता एव दातव्यम्। एषः भवतोः प्रथमः अपराधः इत्यतः दण्डात् मुक्तिः दत्ता" इति।

गजपतिः मातुलस्य हस्ते यत् धनं दत्तवान् आसीत् तेन, अन्येन च धनेन ऋणं समग्रं प्रत्यर्पितम्। किन्तु ततः आरभ्य तौ 'वञ्चकौ' इत्येव प्रसिद्धौ जातौ।





# लुप्तप्राप्तः युवराजः

## ३

(सुमेधराज्यस्य राजानं शान्तिप्रियं शान्तिदेवं, राज्ञीं, द्विवर्षीयं राजकुमारं च मारयितुं सेनापतिः वीरसिंहः तन्त्रं रचितवान्। गूढचरद्वारा एतां वार्तां कथमपि जानन् राजा सपुत्रां राज्ञीं सुरङ्गमार्गेण प्रेषितवान्। स्वयं च एकाकितया वीरसिंहभटान् सम्मुखीकृतवान्। एतस्मिन् एव सन्दर्भे आत्मरक्षणार्थं नद्यां पतितवान् सः। तदनन्तरम्......।)

अन्तःपुरात् आरभ्यमाणस्य सुरङ्गस्य सोपानानाम् उपरि स्थिता राज्ञी अश्रूणि स्रावयन्ती उपरि दृष्टवती। तावता राजा सुरङ्गस्य द्वारं पिहितवान् आसीत्। 'इतः परम् एतस्मिन् जन्मनि अहं पत्युः मुखं पश्येयं वा न वा' इति चिन्तयन्ती राज्ञी नितरां दुःखम् अनुभूतवती।

"कैश्चित् निमेषेभ्यः पूर्वम् अहम् आनन्दसागरे निमग्ना आसम्। पतिः अपि तथैव। किन्तु अल्पे एव काले घोरा विपत् आपतिता। एतत् स्वप्नः स्यात् वा? सर्वथा न। जाग्रदवस्थायां स्वप्नस्य सम्भवः कथम्? तर्हि कथम् एताः घटनाः प्रवृत्ताः?" इति बहुधा चिन्तयति राज्ञी।

अद्यावधि तया एकाकिन्या कुत्रापि न गतम् आसीत्। विवाहात् पूर्वं बहिर्गमनसमये सख्यः भवन्ति स्म। विवाहानन्तरं तु परिचारिकाः रक्षकभटाः च सदा भवन्ति स्म एव। अतः तया जीवने कदापि एकाकितया बहिः न गतम् आसीत्। एतादृशस्य कष्टस्य



सम्मुखीकरणम् अपि ऐदम्प्राथम्येन एव।

राजकुमारः तस्याः स्कन्धे निद्रितवान् आसीत्। तस्य जागरणं यथा न भवेत् तथा मृदुतया पदानि स्थापयन्ती एकेन हस्तेन दीपिकां गृहीत्वा सोपानमार्गेण अग्रे गतवती राज्ञी। घनान्धकारः आसीत् खलु तत्र? अतः दीपिकायां सत्याम् अपि अधिकदूरं न दृश्यते स्म। स च सुरङ्गः शिलामयः। शिलां कर्तयित्वा सुरङ्गमार्गः कल्पितः आसीत्। एतस्मिन् मार्गे कियद्दूरं गन्तव्यम्, अग्रे किं वा करणीयम् इत्यादयः प्रश्नाः राज्ञीं बाधन्ते। देवः एव अग्रिमं मार्गं प्रदर्शयिष्यति इति भावयित्वा सा अग्रे गतवती।

सुरङ्गमार्गे वायुसञ्चारः न आसीत्। तत्र तत्र अल्पः जलांशः अपि आसीत्। अतः मार्गः स्खलति स्म कदाचित्। अग्रे गमनसमये पादेन किमपि स्पृष्टम् अभवत्। भीता राज्ञी उत्प्लुत्य तिष्ठन्ती पतनं निवारितवती। एवम् उत्प्लवनेन तस्याः हस्ते स्थिता दीपिका अधः अपतत्। एतेन तत्र अकस्मात् गाढान्धकारः व्याप्तः। अग्रे पदं स्थापयितुम् अशक्नुवती सा स्तब्धा स्थितवती।

क्षणकालस्य अनन्तरं सा सर्वम् अस्पष्टतया द्रष्टुं शक्तवती। दूरस्थः कश्चन प्रकाशः तया दृष्टः। तं प्रकाशम् अनुसृत्य मन्दं पदं स्थापयन्ती सा अग्रे गतवती। इदानीं सा पत्युः वचनं स्मृतवती यत् सुरङ्गमार्गे तत्र तत्र प्रकाशमानाः मणयः भवन्ति इति। तादृशस्य मणेः प्रकाशः एव तया दृष्टः। 'दीपिकायाः नाशे अपि मणिप्रकाशेन अहम् उपकृता अभवम्' इति आलोचितवती सा।

एतावता स्कन्धे स्थितः शिशुः जागरितः अभवत्। पुत्रम् उरसा दृढम् आलिङ्ग्य मन्दस्पर्शेन तं पुनरपि निद्रां गमयन्ती सा वेगेन अग्रे गतवती। किञ्चिद्दूरं गमनेन एव सा नितरां श्रान्ता। श्रान्तिवशात् पदस्थापने क्लेशम् अनुभवन्ती सा दीर्घं निःश्वसिति। कथमपि बहिः गन्तव्यम् एव इत्यतः सा पुनः निःश्वासवेगं निरुध्य अग्रे गतवती।

अन्ते तया सुरङ्गस्य अन्तभागः प्राप्तः। इतोऽपि अग्रे सुरङ्गभित्तिः दृश्यते, न तु मार्गः। तस्यां भित्तौ कान्तिमयः कश्चन मणिः दृश्यते स्म। मणेः पार्श्वे कीलकम् एकं

दृष्टं तया। सा समग्रं बलं मेलयित्वा कीलकं चालितवती। तदा किञ्चन शिलाफलकम् अपसृतम् अभवत्।

एवं दृष्टेन मार्गेण सा अग्रे गतवती। तत्र अपरः विशालः सुरङ्गसदृशः मार्गः तया प्राप्तः। तेन मार्गेण सा पुनरपि अग्रे गतवती। किञ्चिद्दूरं गमनानन्तरं तया शिलाद्वारं दृष्टम्। अल्पेन एव प्रयासेन सा शिलाद्वारम् उद्घाटितवती। पुरतः महत् अरण्यं दृष्टं तया। आह्लादकरी कौमुदी तत्र सर्वत्र प्रसृता आसीत्। प्रशान्तं, गम्भीरम्, अव्यक्त-भीतिजनकं च आसीत् तत् अरण्यम्। शीतलः वायुः वाति स्म। सा तं वायुं पुनः पुनः सेवितवती।

तस्याः पुत्रः तु सुखमय्यां निद्रायां लीनः अस्ति। एतत् दृष्ट्वा मनःसमाधानं प्राप्तवती राज्ञी। यदि सः रोदनं कुर्यात् तर्हि तेन क्रूरजन्तवः आकृष्टाः भवेयुः। प्रबला पिपासा इदानीं राज्ञीं बाधते। किन्तु मध्यरात्रे अन्धकारे जलान्वेषणं कथं वा शक्यम्?

'कदा उषःकालः भवेत् इति न ज्ञायते' इति आलोचयन्ती सा शिलायाः उपरि उपविष्टवती। पुत्रं च अङ्के शायितवती। अल्पे एव काले तया अस्पष्टः क्षीणः जलप्रवाहशब्दः श्रुतः। सा मन्दम् उत्थाय तं शब्दम् अनुसृत्य गतवती। तत्र तया कल्यासदृशी नदी दृष्टा। सा पुत्रं तृणानाम् उपरि शायित्वा तेन शीतलजलेन मुखं



प्रक्षाल्य आतृप्ति जलं पीतवती।

जलं पीत्वा प्रत्यागत्य पुत्रं स्तन्यं पायितवती। क्षीरप्राप्त्या जागरणं प्राप्य पुत्रः मातुः मुखं दृष्ट्वा हसितवान्। नूतनं परिसरं सः आश्चर्येण पश्यति। हसतः पुत्रस्य मुखं दृष्ट्वा क्षणकालं समग्रं क्लेशम् अपि विस्मृतवती राज्ञी।

पूर्वस्यां दिशि अरुणच्छाया दृष्टा। तत्र तत्र पक्षिणः जागरणं प्राप्य कलरवं कुर्वन्ति। स्तन्यपानेन सन्तृप्तः बालः मातुः अङ्कात् अवतीर्य तृणानाम् उपरि सञ्चरति। न काऽपि चिन्ता तस्य, न वा भीतिः।

तृणानाम् उपरि सञ्चरन् सः अग्रे अग्रे गतवान्। "अग्रे मा गच्छतु भोः" इति उपविष्टा एव उक्तवती राज्ञी।



पुत्रः तु परिवृत्य मातरम् एकवारं दृष्ट्वा हसितवान्। पुनरपि अग्रे गन्तुम् उद्युक्तः सः। तं ग्रहीतुम् उत्थिता राज्ञी शिरोभ्रमणं प्राप्य पादद्वयस्थापनाभ्यन्तरे एव पतितवती।

अर्धमूर्च्छावस्थायां स्थिता सा– "वत्स! दूरं मा गच्छतु रे, आगच्छतु अत्र" इति वदन्ती, उत्थातुं, नेत्रम् उद्घाटयितुं वा अशक्ता पूर्णतः विसंज्ञा अभवत्।

तस्मिन् एव अरण्ये जयानन्दः नाम मुनिः निवसति स्म। प्रतिदिनम् इव तस्मिन् दिने अपि अरुणोदयानन्तरं सः पर्वतमूले स्थितायां निर्झर्यां स्नानार्थं प्रस्थितवान्।

एतस्मिन् उषःकाले अल्पवयस्कस्य कस्यचित् बालकस्य किलकिलेति हासं श्रुतवान् सः। आश्चर्यम् अनुभवन् सः गमनं स्थगयन् परितः दृष्टिं प्रसारितवान्। अनतिदूरे एव कश्चन सुन्दरः बालकः एतं दृष्ट्वा हसन् अस्ति! 'कोऽयम् अपूर्वः शिशुः? किम् आकाशात् आगतः वा एषः?' इति आलोचयन् शिशोः समीपं गतवान् मुनिः।

समीपम् आगच्छन्तं मुनिं दृष्ट्वा सन्तोषेण हस्तं चालयन् सः बालकः मुनिं स्वसमीपम् आह्वयन् अस्ति इव। मुनिः अग्रे गत्वा प्रीत्या तम् उन्नीतवान्। शिशोः कण्ठे अमूल्यः सुवर्णहारः आसीत्। हारस्य मध्ये विशिष्टं पदकम् आसीत्। पदके च शुण्डया कमलपुष्पम् उन्नीय स्थितवतः गजस्य चित्रम् आसीत्। एषः शिशुः राजकुटुम्बीयः एव स्यात् इति तर्कितवान् मुनिः।

बालकः पूर्वस्यां दिशि गमनोत्साहं प्रदर्शयति स्म। मुनिः तस्यां दिशि किञ्चिद्दूरं गतवान्। तत्र सः तृणानाम् उपरि पतितां विसंज्ञां राज्ञीं दृष्टवान्। मुनिः झटिति निर्झरीतः जलम् आनीय तस्याः मुखे सेचितवान्। सा मन्दं नेत्रम् उद्घाट्य उत्थातुं प्रयत्नं कृतवती। किन्तु तया उत्थातुं न शक्तम्।

"मातः! किञ्चित्कालानन्तरम् उत्थातुम् अर्हति भवती। भवती का इति वदतु प्रथमम्" इति अवनम्य उक्तवान् मुनिः।

"श्रीमन्! भवतः दयया मया संज्ञा प्राप्ता। भवन्तम् अहं पितरं भावयामि। भगवान् एव

दयया भवन्तं मत्समीपं प्रेषितवान् स्यात्। एतस्य राज्यस्य दौर्भाग्यवती राज्ञी अहम्। मध्यरात्रसमये विश्वासघातकाः शत्रवः अकस्मात् आक्रमणं कृतवन्तः। मम पतिः महाराजः सपुत्रां मां सुरङ्गमार्गेण प्रेषयित्वा शत्रून् सम्मुखीकर्तुम् उद्युक्तः। न जाने तस्य...." इति हस्तेन मुखम् अपावृत्य उच्चैः रुदितवती।

"अलं विस्तरेण। शान्ता भवतु भवती। ह्यः राजकुमारस्य द्वितीयः जन्मदिनोत्सवः आसीत् खलु?" इति पृष्टवान् मुनिः।

"आं महात्मन्! तादृशं दिनम् एव शत्रवः कुतन्त्राचरणार्थं निश्चितवन्तः आसन्। एवं भवेत् इति केनापि न निरीक्षितम् आसीत्" इति एतावत् महता कष्टेन उक्तवती राज्ञी।

"अलं कथनेन। एतावता सर्वं ज्ञातं मया। कष्टं नाम्ना अपि न जानाति स्म भवती। अतः दुःखम्। शान्ता भवतु" इति उक्तवान् मुनिः।

राज्ञी विषादेन हसन्ती पुनः कथितवती—

"श्रीमन्! अचिरात् एव मम कथनं समाप्तं भवति इति भावयामि। मम अन्तिमकालः सन्निहितः इति भाति। मम पुत्रस्य रक्षकः इतःपरं भवान् एव। पुत्रः सदा रक्षणीयः इति मम आर्यपुत्रस्य आज्ञा आसीत्। स च भारः भवति निक्षिप्तः मया। इतःपरं निश्चिन्ततया इहलोकयात्रां समापयितुं शक्नोमि। मम पतिः सकुशलम् अस्ति वा न वा ज्ञातव्यम् इति इच्छा आसीत् मम" इति।

"वत्से! भगवान् शरणागतरक्षकः। यदि तस्य अनुग्रहः न स्यात् तर्हि मम आगमनम् अत्र न भवेत्। राजा अपि भगवता रक्षितः स्यात् एव। भगवन्तं प्रार्थयाव आवाम्। भीतिः मास्तु। सति भगवति, का चिन्ता?" इति सान्त्वनवचनम् उक्तवान् मुनिः।

सा महता प्रयासेन मन्दहासं प्रकटितवती। तेनैव सह तस्याः नेत्रे निमीलिते। श्वासोच्छ्वासः अपि स्थगितः। तस्या नाडीं परीक्ष्य मुनिः ज्ञातवान् यत् एषा इतःपरं नेत्रे उन्मीलयितुं न अर्हति इति। – (अनुवर्तते)





# मुनेः अनुग्रहः

यथा यथा त्रिविक्रमः कथाः शृणोति तथा तथा नूतनाः कथाः परिकल्प्य वदन्तं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! चक्रवर्ती भवान् एवं मध्यरात्रे श्मशानमार्गे क्लेशं यत् अनुभवति तत् दृष्ट्वा नितरां खेदम् अनुभवामि अहम्। भवान् केनचित् मेधाविना तपस्विना वा एतस्मिन् कार्ये चोदितः स्यात्। किन्तु भवान् कार्यं कुर्वन् यदा अग्रे प्रगतिं कीर्तिं च साधयिष्यति तदा भवतः प्रेरकः किं मौनं तिष्ठेत्? ईर्ष्या सर्वेषु अपि भवति एव। सदानन्दः नाम मुनिः अपि पूर्वं विक्रमस्य विषये ईर्ष्यया व्यवहृतवान्। एवं स्थिते किमुत सामान्यानां कथा? भवतः मार्गायासस्य

## वेतालकथा



परिहारार्थं कथां श्रावयामि। श्रद्धया शृणोतु" इति।

अनन्तरं वेतालेन कथा आरब्धा–

कान्तिपुरं कश्चन लघुग्रामः। तत्र धरणीन्द्रः नाम कश्चन कृषिकः आसीत्। विक्रमः तस्य एकमात्रपुत्रः। विद्याभ्यासे तस्य किञ्चिदपि आसक्तिः नास्ति। मातुः मुखात् कथानां श्रवणे तस्य विशेषासक्तिः। ताः कथाः प्रायः ऋषिमुनीन् अधिकृत्य भवन्ति स्म। 'अरण्ये निवसन्तः मुनयः महिमान्विताः भवन्ति, तेषाम् अनुग्रहः प्राप्तः चेत् यत्किमपि कार्यं साधयितुं शक्यम्' इति भावयति स्म विक्रमः। किन्तु तादृशाः मुनयः कथं द्रष्टव्याः इति तु सः न जानाति।

एकदा धरणीन्द्रः विक्रमम् आहूय उक्तवान्– "भोः, भवान् दशवर्षीयः जातः चेदपि विद्याभ्यासे नितराम् अनासक्तः अस्ति। विद्याभ्यासं कर्तुं न इच्छति चेत् कृषिकार्ये मम साहाय्यं वा करोतु। अद्य अजान् मेषान् च अरण्यं नीत्वा चारयित्वा प्रत्यानयतु" इति।

तद्दिने विक्रमः अजैः सह अरण्यसमीपस्थं शाद्वलं गतवान्। तान् तत्र चारणार्थं त्यक्त्वा वृक्षमूलम् आलम्ब्य उपविष्टः सः तत्रैव निद्रां कृतवान्।

यदा सः जागरितः तदा तेन अजाः न दृष्टाः। अजान् अन्विष्यन् सः अरण्यं प्रविष्टवान्। अरण्ये कुत्रचित् वृक्षस्य अधः नेत्रे निमील्य तपसि लीनः कश्चन मुनीश्वरः तेन दृष्टः। तस्य मुनेः नाम सदानन्दः इति।

यावत् मुनिः नेत्रे न उन्मीलितवान् तावत् विक्रमः तस्य पुरतः श्रद्धया मौनम् उपविष्टवान्। यदा मुनिः ध्यानं समाप्य नेत्रे उन्मीलितवान् तदा विक्रमः उत्थाय भक्त्या नमस्कृतवान्।

मुनिः मन्दहासपूर्वकं पृष्टवान्– "किं भोः, क्रूरमृगाणां सञ्चारयोग्यम् एतत् अरण्यं किमर्थम् आगतवान् भवान्?" इति।

तदा विक्रमः उक्तवान्– "अजचारणार्थम् अहं शाद्वलम् आगतः। अहं निद्रातः यदा उत्थितः तदा अजाः न दृष्टाः। तेषाम् अन्वेषणं कुर्वन् अत्र आगतः। भवन्तं दृष्ट्वा आशीर्वादं प्राप्तुम् अत्र उपविष्टवान्" इति।

मुनिः क्षणकालं नेत्रे निमील्य ध्यात्वा पुनः नेत्रे उद्घाट्य– "भवतः निद्रासमये सर्वे अजाः गृहं प्राप्तवन्तः सन्ति। इदानीम् अरण्ये क्रूरमृगाः सञ्चारं कुर्वन्ति। तेभ्यः भवतः अपायः यथा न स्यात् तथा काञ्चित् रुद्राक्षमालां यच्छामि। तां धृत्वा निर्भयं गृहं गच्छतु" इति उक्त्वा एकां रुद्राक्षमालां विक्रमाय दत्तवान्।

विक्रमः रुद्राक्षमालां स्वीकृत्य– "श्रीमन्! मम काचित् अपेक्षा अस्ति। मम माता वदति यत् मुनीश्वराः अपूर्वशक्तिमन्तः भवन्ति इति। मम विद्याभ्यासे सर्वथा अनासक्तिः। भवता कोऽपि मन्त्रः यदि उपदिश्येत तर्हि अहम् अपि पण्डितः सन् प्रसिद्धिं प्राप्नुयाम्। कृपया माम् अनुगृह्णातु" इति विनयेन प्रार्थितवान्।

"वत्स! मन्त्रतन्त्रादिभिः या शक्तिः सम्पाद्यते सा न स्थिरा। मानवः स्वसामर्थ्येन एव प्रगतिं साधयेत्। सा एव प्रगतिः श्रेयस्करी। अतः भवान् विद्याभ्यासे श्रद्धां प्रदर्शयतु। धैर्यशाली निष्कपटः युवकः भवान् निश्चयेन कीर्तिमान् भविष्यति" इति उक्तवान् सदानन्दमुनिः।

एतेन वचनेन प्रेरितः विक्रमः गृहं प्रत्यागत्य विद्याभ्यासे आसक्तिं प्रदर्शितवान्। अहोरात्रं पठन् श्रद्धया सर्वस्य मननं कुर्वन् गुरोः प्रियः शिष्यः जातः सः। यदा सः पञ्चदशवर्षीयः जातः तदा



सकलशास्त्रेषु पारङ्गतः जातः आसीत्।

अनन्तरं कदाचित् विक्रमः अरण्यं गत्वा सदानन्दमुनिं साष्टाङ्गं नमस्कृत्य उक्तवान्– "महात्मन्! भवतः प्रेरणया अहं विद्याभ्यासे आसक्तिं प्राप्य शास्त्रेषु पारङ्गतः जातः। तथापि काचित् अतृप्तिः मां बाधते। जीवने सफलतासम्पादनार्थं केवला विद्या अपर्याप्ता इति मम अभिप्रायः" इति।

सदानन्दमुनिः शिरश्चालनपूर्वकम् एतत् अङ्गीकृत्य उक्तवान्– "भवतः अभिप्रायः युक्तः एव। आत्मरक्षणे, शत्रुविनाशने, दुष्टदण्डने च भवता प्राप्ता विद्या अपर्याप्ता। तदर्थं क्षात्रविद्या अपि भवता अध्येतव्या। आम्रपालीनामके नगरे ज्वालामुखः नाम

कश्चन वीरः अस्ति। तस्य समीपं गत्वा वदतु यत् सदानन्दमुनिः मां प्रेषितवान् इति। सः भवन्तं सर्वाः क्षात्रविद्याः पाठयति" इति।

विक्रमः ततः आम्रपालीनगरं गत्वा ज्वालामुखस्य शिष्यत्वं प्राप्य अल्पे एव काले सर्वाः क्षात्रविद्याः अधीतवान्। तत्समये रत्नभूषणः नाम भूस्वामी विक्रमं स्वसमीपम् आहूतवान्।

"विक्रम! भवतः सामर्थ्यविषये ज्वालामुखद्वारा मया सर्वं श्रुतम्। महावीरं भवन्तम् अहं मम अङ्गरक्षकत्वेन नियोक्तुम् इच्छामि। किम् एतत् अनुमतं भवतः?" इति पृष्टवान् भूस्वामी।

विक्रमः स्वस्य अङ्गीकारं प्रदर्श्य तद्दिने एव सदानन्दमुनेः समीपं गत्वा प्रवृत्तं सर्वं विवेद्य– "श्रीमन्! एषः अङ्गरक्षकोद्योगः मम पाण्डित्यस्य उचितः न इति जानन् अपि एतम् अङ्गीकृतवान्। प्राप्तम् अवकाशम् अङ्गीकृत्य तद्द्वारा उत्तमः उद्योगः प्राप्तव्यः इति मम आशयः। मम चिन्तनम् अनुचितं न खलु?" इति पृष्टवान्।

तदा सदानन्दमुनिः– "भवतः चिन्तनं युक्तम् एव। भवान् इतोऽप्यधिकाम् अभिवृद्धिं यथा प्राप्नुयात् तथा आशिषा अनुगृह्णामि अहम्" इति वदन् विक्रमम् आशिषा अनुगृहीतवान्।

तस्य राज्यस्य राजधानी मयूरपुरम्। तत्र निवसन् मन्त्री सुमन्त्रः भूस्वामिनः रत्नभूषणस्य आत्मीयं मित्रम्। कदाचित् मन्त्री सुमन्त्रः रत्नभूषणेन मिलितः



वार्तालापसन्दर्भे उक्तवान्– "अस्माकं देशस्य आर्थिकपरिस्थितिः नितरां शोचनीया अस्ति। कोषागारं रिक्तप्रायम्। इदानीं प्रजानाम् उपरि नूतनस्य करस्य आरोपणं विना नान्या गतिः। किन्तु एवं करस्य आरोपणं महाराजः न इच्छति। किं करणीयम् इति न ज्ञायते। मन्त्रिणः मम इदानीम् उभयसङ्कटम्" इति।

तदा रत्नभूषणस्य अङ्गरक्षकत्वेन तत्रैव स्थितः विक्रमः अग्रे आगत्य उक्तवान्– "मन्त्रिवर्य! भवान् अन्यथा न चिन्तयति चेत् अहं करारोपणं विना एव कोषागारपूरणस्य मार्गं वक्तुं शक्नोमि" इति।

"अन्यथा चिन्तनं किमर्थम्? युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि। भवता चिन्तितं मार्गं निस्सङ्कोचं वदतु तावत्" इति उक्तवान् मन्त्री सुमन्त्रः।

"अस्माकं राज्ये समुद्रवाणिज्ये निरताः बहवः वणिजः सन्ति इति भवान् जानाति एव। राज्ञे न्याय्यः यः करः दातव्यः सः तैः दीयमानः अस्ति वा इति प्रथमं परिशीलयतु। एतेन भवतः समस्या निश्चयेन परिहृता भविष्यति" इति सूचितवान् विक्रमः।

विक्रमेण यथा सूचितं तथा करणेन मन्त्रिणः समस्या परिहृता अभवत्। एतेन सन्तुष्टः मन्त्री रत्नभूषणम् उक्तवान्– "एतम् अहं मम साहाय्यकत्वेन नियोक्तुम् इच्छामि" इति।

रत्नभूषणः महता सन्तोषेण अनुमतिं दत्तवान्। विक्रमः एतां वार्तां सदानन्दमुनिं





निवेदितवान्।

तदा सदानन्दमुनिः उक्तवान्– "साधु! बुद्धिबलेन भवान् उन्नतिं साधितवान्। एषः एव युक्तः जीवनमार्गः" इति।

पुनः कदाचित् दुष्टमुखः नाम मान्त्रिकः महाराजस्य मञ्जीरनाथस्य आस्थानम् आगत्य दर्पेण उक्तवान्– "अये राजन्! अहं कश्चन महामान्त्रिकः। लोकैकसुन्दरी परिणेतव्या इति मम इच्छा। अहं मम मायादर्पणस्य साहाय्यात् ज्ञातवान् यत् भवतः पुत्री स्वयम्प्रभा परमसुन्दरी इति। ताम् अहं परिणेतुम् इच्छामि। विना विरोधं तां मह्यम् अर्पयतु। मां सम्मुखीकर्तुम् एतस्मिन् लोके कोऽपि न शक्नोति इति स्मरतु" इति।

मान्त्रिकस्य औद्धत्यपूर्णं वचनं श्रुत्वा क्रुद्धः मञ्जीरनाथः खड्गम् आकृष्य सिंहासनात् उत्थितवान्। तावता दुष्टमुखः विकटाट्टहासं कुर्वन् मन्त्रदण्डम् आकाशे चालितवान्। तत्क्षणे एव राज्ञः हस्तौ पादौ च शक्तिहीनौ सञ्जातौ। राजा सिंहासनस्य उपरि पतितवान्।

दुष्टमुखः सभासदान् सर्वान् उग्रदृष्ट्या पश्यन्– "भवत्सु कोऽपि मां सम्मुखीकर्तुं यदि प्रयत्नं कुर्यात् तर्हि सः राज्ञा या गतिः प्राप्ता तां गतिं प्राप्नुयात्" इति उक्त्वा राजकुमारीं स्वयम्प्रभाम् उन्नीय ततः अदृश्यः अभवत्।

राजा प्रकटितवान् यत् यः तं दुष्टं मान्त्रिकं मारयित्वा मम पुत्रीं प्रत्यानेष्यति तस्मै एव सा दीयते, सः सिंहासनस्य उत्तराधिकारी भविष्यति च इति।

विक्रमः तद्दिने एव अरण्यं गत्वा सदानन्दमुनिं प्रवृत्तं सर्वं निवेद्य– "श्रीमन्! एषः कश्चन अपूर्वः अवकाशः सन्निहितः अस्ति। एतस्मिन् प्रयत्ने अहं विजयी यथा स्याम् तथा आशिषा अनुग्रहीतव्यः अहम्" इति प्रार्थितवान्।

मुनिः क्षणकालं ध्यानस्थः सन् पुनः उक्तवान्– "विक्रम! भवतः शक्तेः चिन्तनस्य च परीक्षाकालः एषः। दुष्टमुखः मन्त्रे निपुणः। तस्य अभिमुखं युद्धं कर्तुं कोऽपि न शक्नोति। एतत् भवतः मनसि भवतु। सः दण्डकारण्ये पर्वतमूले निर्झरिण्याः

पार्श्वे स्थितायां गुहायां निवसति। विजयं सम्पाद्य आगच्छतु भवान्'' इति।

दुष्टं मान्त्रिकं संहर्तुम् इच्छन् विक्रमः दण्डकारण्यं गतवान्। मुनिना सूचिता गुहा अपि तेन प्राप्ता। 'मान्त्रिकः मां यथा न पश्येत् तथा आत्मानं निगूह्य सः मारणीयः' इति आलोच्य विक्रमः गुहासमीपे स्थितस्य वृक्षस्य पृष्ठतः धनुर्बाणादिकं सज्जीकृत्य स्थितवान्। अल्पे एव काले मान्त्रिकः गुहातः बहिः आगतवान्। तदा विक्रमः तस्य वक्षःस्थलं लक्ष्यीकृत्य तीक्ष्णं बाणं प्रयुक्तवान्। अपरस्मिन् क्षणे मान्त्रिकः 'हा हा' इति आर्तनादं कुर्वन् भूमौ पतितवान्।

यदा मान्त्रिकः मृतः तदा राज्ञः मञ्जीरनाथस्य हस्तौ पादौ च सम्यक् जातौ। सर्वेषु पश्यत्सु, विक्रमः राजकुमार्या स्वयम्प्रभया सह सकुशलं प्रत्यागतवान्।

राजा पूर्वघोषणायाः अनुसारं विक्रम-स्वयम्प्रभयोः विवाहं निर्वर्तितवान्। मञ्जीरनाथस्य अनन्तरं विक्रमः एव राजा जातः।

राजा विक्रमः सङ्कल्पितवान् यत् समीपस्थानि सर्वाणि राज्यानि जित्वा मया चक्रवर्तित्वं सम्पादनीयम् इति। एतदर्थं सः सदानन्दमुनेः समीपं गत्वा भक्त्या नमस्कृत्य– ''श्रीमन्! स्वशक्त्या कथम् उन्नतिः प्राप्तव्या इति बोधयन् भवान् मम इदानीन्तनस्थितेः कारणं जातः। भवतः



आशिषा एव अहं उन्नतः जातः। जीवने निरन्तरं प्रगतिः भवेत् इत्येव भवतः आशयः इति अहं भावयामि। अतः प्रगतेः अपरं सोपानम् आरोढुम् अहं सङ्कल्पितवान् अस्मि'' इति उक्त्वा परराज्याक्रमणस्य आशां निवेद्य मुनेः आशीर्वादं प्रार्थितवान्।

तदा सदानन्दमुनिः कोपेन विक्रमं पश्यन्– ''अये, अलं कथनेन। अत्याशाग्रस्तः अस्ति भवान्। मम आशीर्वादं प्राप्तुं नार्हति भवान्'' इति उक्त्वा ध्याने लीनः जतः।

मौनम् उत्थाय ततः राजधानीं प्रत्यागतः विक्रमः चक्रवर्तित्वप्राप्तेः आशां परित्यज्य शासनकार्ये अवधानं स्थापितवान्।

वेतालः एवं कथां समाप्य अवदत्–

"राजन्! प्रगतिं साधयितुम् इच्छन्तं विक्रमं प्रोत्साहितवान् सदानन्दमुनिः विक्रमस्य चक्रवर्तित्वप्राप्तीच्छां किमर्थं खण्डितवान्? यदि विक्रमः चक्रवर्ती भवेत् तर्हि विशेषकीर्तिः प्राप्येत खलु तेन? एतादृशी इच्छा अवश्यं प्रोत्साहनीया आसीत् मुनिना। तथापि किमर्थं सः तथा कृतवान्? असूया एव खलु अत्र कारणम्? मम अपेक्षया एषः यदि प्रसिद्धः स्यात् तर्हि मम हानिः स्यात् इति आलोचितवान् वा मुनिः? विक्रमः सत्त्वशाली इत्यत्र सन्देहः एव नास्ति। तादृशः सः चक्रवर्तित्वप्राप्तौ किमर्थं मुनेः आशीर्वादं प्रार्थितवान्? तद्विना अपि सः स्वशक्त्या एव चक्रवर्ती भवितुम् अर्हति स्म खलु? एतेषाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "आशायाः काचित् सीमा भवति। सा सीमा अतिक्रान्ता चेत् हानिः निश्चिता। विक्रमः इतः पूर्वं यानि उन्नतिसोपानानि आरूढवान् तानि अन्योपकारकाणि आसन्। अतः मुनिः प्रोत्साहितवान्। किन्तु तेन यदि चक्रवर्तित्वं प्राप्तव्यं तर्हि जननाशः धननाशः च करणीयः एव। विक्रमः प्रसिद्धिं प्राप्तुम् इच्छन् एतम् अंशं न लक्षितवान् आसीत्। मुनिः यदा आशीर्वादं निराकृतवान् तदा सः स्वस्य इच्छायाः दुष्परिणामं ज्ञातवान्। मुनेः आशीर्वादबलेन एव विक्रमेण प्रगतिः साधिता। ज्येष्ठानाम् आशीर्वादः न भवति चेत् केवला शक्तिः कार्यं साधयितुं न अर्हति। एतत् जानन् विक्रमः मुनेः आशीर्वादं प्रार्थितवान्। प्रार्थितस्य अप्राप्तौ मौनं स्थितवान्। सदानन्दसदृशः मुनिः नितरां विरलः। तादृशे मुनौ ईर्ष्यालेशम् अपि न पश्यामः वयम्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# परिहासवचनम्

राजारामस्य एकमात्रपुत्रः नागेशः। बाल्यतः अपि सः मातापितृभ्यां महत्या प्रीत्या लालितः आसीत्। अतः सः शीघ्रकोपी कटुकथकः च सञ्जातः। किन्तु सः स्वभावेन दुष्टः तु न। कदाचित् सः वाङ्निग्रहणं कर्तुं न शक्नोति, तावदेव।

नागेशः यदा प्राप्तवयस्कः जातः तदा तस्मै स्वपुत्रीं दातुम् इच्छन् दूरबन्धुः सूर्यप्रकाशः राजारामस्य गृहम् आगतवान्। सर्वे एकत्र उपविश्य वार्तालापं कृतवन्तः। तन्मध्ये कदाचित् नागेशः हसन् सूर्यप्रकाशम् उक्तवान्– "भवतः पुत्री रूपेण भवत्सदृशी एव स्यात् खलु?" इति।

तत् श्रुत्वा सूर्यप्रकाशः हसन् उक्तवान्– "मम पुत्री न मत्सदृशी, न वा भवत्सदृशी, अपि तु सुन्दरी" इति।

तदा नागेशः कोपेन– "मम रूपं जानन् अपि भवान् किमर्थं मन्निमित्तम् एतावद्दूरम् आगतवान्?" इति पृष्टवान्।

"भवान् मम दूरबन्धुः। भवते यदि कोऽपि स्वपुत्रीं दातुं सिद्धः न स्यात् तर्हि भवान् अविवाहितः एव तिष्ठेत्। अत एव अनुकम्पया अत्र आगतः" इति हसन् उक्तवान् सूर्यप्रकाशः।

एतत् श्रुत्वा नितरां कुपितः नागेशः ततः उत्थाय गतवान्। अन्तः गत्वा मातरम् उक्तवान् च– "कन्यापितुः एतावान् गर्वः चेत् कथम्? गर्वयुतस्य एतस्य पुत्रीम् अहं न परिणेष्यामि" इति।

तदा माता सान्त्वनस्वरेण पुत्रम् उक्तवती– "भोः, परिहासार्थं किमपि उक्तं चेत् कोपः किमर्थम्? उत्तमः सम्बन्धः एषः न त्यक्तव्यः। वर्षात् पूर्वं मया सूर्यप्रकाशस्य पुत्री दृष्टा। सुवर्णपुत्थलिका इव शोभते सा।

सूर्यप्रकाशः धनिकः अपि। अतः अविचिन्त्य मा व्यवहरतु'' इति।

''तत्सर्वं भवतु नाम। किन्तु यः मां कोपितवान् तस्य पुत्रीम् अहं न परिणेष्यामि एव। सकृत् उक्तम् अहं कदापि न परिवर्तयामि। अतः एतद्विषये अनुरोधः मास्तु'' इति कोपेन उक्तवान् नागेशः।

अनन्यगतिका माता पतिम् अन्तः आहूय प्रवृत्तं समग्रं निवेदितवती। राजारामः सूर्यप्रकाशं पुत्रस्य आशयं निवेदितवान्।

सूर्यप्रकाशः नागेशस्य समीपं गत्वा– ''भोः, भवान् मम पुत्रीं परिणेतुं न सिद्धः इति श्रुतम्। किमर्थं तत्?'' इति पृष्टवान्।

''किम् अन्यत्? भवान् माम् अपमानितवान् यत् तदेव कारणम्?'' इति उक्तवान् नागेशः।

तदा सूर्यप्रकाशः हसन्– ''भोः, मया भवतः अपमाननं कुत्र कृतम्? परिहासार्थं यत् उक्तं तत् यथार्थं भावयति खलु भवान्? भवन्तं जामातृत्वेन इच्छन् एव खलु अत्र आगतः अहम्?'' इति उक्तवान्।

''परिहासार्थम् अपि उक्तम् अपमानकरं वचनम् अहं न सहे'' इति उक्तवान् नागेशः।

''भवता आरम्भे यादृशं वचनम् उक्तं तादृशम् उत्तरं दत्तं मया। भवता आरम्भे किमर्थं मम अपमाननं कृतम्?'' इति पृष्टवान् सूर्यप्रकाशः।

''मया कुत्र भवतः अपमाननं कृतम्?'' इति पृष्टवान् नागेशः।

''भवत्सदृशी एव स्यात् भवतः पुत्री इति



वदन् प्रथमं भवान् उपहसितवान्। ज्येष्ठस्य मम उपहासः किम् उचितः आसीत्? अतः अहं तदुचितं प्रत्युत्तरं दत्तवान्" इति स्ववचनं समर्थयन् उक्तवान् सूर्यप्रकाशः।

"आरम्भे मया यत् उक्तं तत् परिहासार्थम्। परिहासार्थं यत् उक्तं तत् तत्काले एव विस्मृतं मया। अहं मनसि किमपि न गोपायामि। यत् दृष्टं तत् स्पष्टैः वचनैः वदामि" इति उक्तवान् नागेशः।

"तदस्तु तावत्। भवान् आत्मना परिहासार्थं यत् उक्तं तत् विस्मृतवान्। तथा चेत् मया परिहासार्थम् उक्तम् अपि कुतो वा न विस्मरति?" इति पृष्टवान् सूर्यप्रकाशः।

"अन्येन कृतम् अपमाननं कथं वा विस्मर्तुं शक्येत? आजीवनं स्मृतौ तिष्ठति तत्। किं वृथा चर्चया? भवतः पुत्र्याः मम च विवाहः भवितुं न अर्हति। भवान् इतः गन्तुम् अर्हति" इति उक्तवान् नागेशः।

"अस्तु तावत्। गच्छामि। भवतः ये स्वभावाः ते एव स्वभावाः चक्रधरपुरे निवसतः आनन्दनामकस्य अपि। किन्तु सः कीर्तिमान्। तेन तथा प्रसिद्धिः कथं प्राप्ता इति अहं तु न जानामि। भवान् एकवारं तं पश्यतु। तस्य प्रसिद्धेः कारणं जानातु। तेन भवान् अपि कीर्तिं सम्पादयितुम् अर्हति" इति उक्त्वा ततः निर्गतवान् सूर्यप्रकाशः।

आनन्दस्य नाम नागेशेन अपि इतः पूर्वं श्रुतम् आसीत् एव। 'तस्य स्वभावः मत्स्वभावेन समानः' इति जानतः नागेशस्य मनसि कुतूहलम् उत्पन्नम्।



सः अनन्तरदिने एव चक्रधरपुरं गत्वा आनन्दं दृष्टवान्। स्वस्य परिचयं निवेदितवान् च।

आनन्दः अपारस्य ऐश्वर्यस्य स्वामी। सः पत्नीपुत्रादिभिः सह सदा सन्तोषेण जीवति। बहवः प्रतिदिनं तस्य गृहम् आगत्य तस्य मार्गदर्शनं प्रार्थयन्ति। तेन यः मार्गः सूचितः तेन तृप्तिं प्राप्य यथाशक्ति उपायनं समर्प्य गच्छन्ति। धनिकाः कदाचित् अमूल्यम् उपायनं समर्पयन्ति।

"भवान् महाज्ञानी। ज्ञानस्य धनस्य च वितरणेन भवता महती कीर्तिः सम्पादिता इति श्रुतम्। मम भवतः च समानः स्वभावः इति मम दूरबन्धुना उक्तम् आसीत्। तत् प्रत्यक्षं द्रष्टव्यम् इति अत्र आगतवान्। किन्तु यत् श्रुतं तत् मिथ्या इति इदानीं ज्ञातम्" इति आनन्दम् उक्तवान् नागेशः।

तदा आनन्दः मन्दहासपूर्वकम् उक्तवान्– "भवतः बन्धुना सत्यम् एव उक्तम्। भवतः मुखात् एव मया भवदीयः स्वभावः श्रुतः खलु? आवयोः स्वभावे नितरां साम्यम् अस्ति। अल्पः भेदः नाम प्रतिवक्ता अल्पम् परिहासं करोति चेदपि भवान् न सहते। अहं तु परिहासार्थं यत् उक्तं तत् अपमानाय इति कदापि न भावयामि। परिहासेन सन्तोषः प्राप्यते। यः परिहासवचनानि सोढुं शक्नोति सः सदा सुखेन स्थास्यति। परिहासं श्रुत्वा कोपः सर्वथा अनुचितः। भवान् अपि अहम् इव आचरति चेत् मत्समानां कीर्तिं प्राप्तुम् अर्हति" इति।

एतेन विवेकं प्राप्तवान् नागेशः ततः साक्षात् चक्रधरपुरं गतवान्। सूर्यप्रकाशं क्षमां सम्प्रार्थ्य तदीयां पुत्रीं परिणेतुम् अङ्गीकारं सूचितवान् चापि।

एवं कथनसमये कार्यनिमित्तम् आगतां सूर्यप्रकाशपुत्रीं दृष्टवान् नागेशः। तस्याः अनुपमं सौन्दर्यं दृष्ट्वा, पूर्वम् एतस्याः विषये परिहासार्थं यत् उक्तं तदर्थं लज्जाम् अनुभूतवान् सः।



# ज्ञानभाण्डागारम्

## सः कः स्यात्?

पूर्वकाले डेल्फीनगरस्य अर्चकाः भविष्यत्कालीनाः घटनाः वदन्ति स्म। कदाचित् लिडियातः कश्चन दूतः डेल्फीं प्रति प्रस्थितवान्। 'स्वभाविजीवनं कीदृशम्' इति ज्ञातुम् इच्छन् राजा तं तथा प्रेषितवान् आसीत्।

केनचित् कारणेन क्रुद्धाः डेल्फी-अर्चकाः कोपेन तं दूतम् अपमानितवन्तः। 'अतिथिरूपेण आगतः सत्करणीयः, न तु अपमाननीयः। अत्र उदाहरणरूपेण काञ्चित् कथां वदामि' इति वदन् सः दूतः गृध्र-कीटयोः कथाम् उक्तवान्।

पूर्वं कश्चन गृध्रः शशस्य ग्रहणार्थम् उद्युक्तः। तदा भीतः शशः गृध्रात् आत्मानं रक्षन् कञ्चित् कीटं शरणं गतवान्। सः कीटः गृध्रं प्रार्थयत् यत् शशं मुञ्चतु भोः इति। किन्तु गृध्रः कीटस्य प्रार्थनां तृणीकृत्य शशं गृहीत्वा अखादत् एव। एतेन खिन्नः क्रुद्धः च कीटः प्रतीकारं साधयितुं सङ्कल्पम् अकरोत्। तदनुगुणं, गृध्रः यत्र अण्डानि स्थापयति तत्र गत्वा तानि अण्डानि अपातयत्। अन्ते गृध्रः बुधस्य अङ्के अण्डम् अस्थापयत्। कीटः तत्रापि गतः एव। सः बुधस्य अङ्के धूलिम्, अवकरान्, मालिन्यं च अपातयत्। एतेषां निवारणार्थं बुधः यदा वस्त्रविधूननं कृतवान् तदा गृध्राण्डानि भूमौ पतितानि, भग्नानि च। अनन्तरं कीटः बुधस्य समीपं गत्वा शरणागतस्य शशस्य दशां स्वस्य खेदं च विस्तरेण अवर्णयत्। तदा बुधः निर्णयं श्रावितवान् यत् गृध्रेण अपराधः कृतः, कीटेन च उचितम् एव आचरितम् इति।

एतां कथां श्रुत्वा पूर्वापेक्षया अधिकं क्रुद्धाः अर्चकाः तं दूतं पर्वतशिखरात् पातयन्तः मारितवन्तः। वदन्तु, सः दूतः कः स्यात्? (उत्तरं ३६तमे पृष्ठे)

## अपि भवान् जानाति?

१. किं शासनं गोवाप्रदेशं स्वायत्तं कृतवत् आसीत्?
२. तादृशस्य आक्रमणस्य नायकः कः आसीत्?
३. हस्तिनापुरं केन निर्मितम्?
४. इतिहासे सुदीर्घः भूकम्पः कदा कुत्र प्रवृत्तः?
५. किं नगरं 'सहस्रस्य शवस्तूपानां नगरम्' इति वदन्ति?
६. एकेन एव अखण्डेन प्रयत्नेन सीलुजलचरः कियद्दूरं तरणं कर्तुम् अर्हति?

(उत्तराणि ३६तमे पृष्ठे)

# मगधः

अस्माकं प्राचीनराज्येषु अन्यतमः अस्ति मगधदेशः। किञ्चिदिव भिन्नरूपेण वेदे अपि एतस्य प्रस्तावः कृतः दृश्यते।

पौराणिककथा एवम् अस्ति— जरासन्धस्य पिता बृहद्रथः एतत् राज्यं स्थापितवान्। जरासन्धः शौर्यमदेन व्यवहरन् सर्वान् राज्ञः बन्दीकृत्य तान् इष्टदेवतायै बलिरूपेण अर्पयितुम् इष्टवान्। बलशाली भीमः मल्लयुद्धे दुष्टं जरासन्धं मारयित्वा तान् राज्ञः बन्धविमुक्तान् कृतवान्। जरासन्धस्य अनन्तरं मगधं पालितवान् तत्पुत्रः कुरुक्षेत्रयुद्धे पाण्डवानां साहाय्यं कृतवान्।

इतिहासयुगे बिम्बसारः नाम महाराजः मगधस्य पालकः आसीत्। तस्य शासनकाले एव महावीरः जैनमतं, गौतमबुद्धः च बौद्धमतं तत्प्रदेशे प्रसारितवन्तौ। तयोः उभयोः अपि विषये राज्ञः बिम्बसारस्य विशेषादरः आसीत्।

बिम्बसारस्य मगधराज्यं यत्र आसीत् तत्र इदानीं पाटना, गया इति मण्डलद्वयं तिष्ठति। बिम्बसारस्य पुत्र अजातशत्रुः गङ्गा-सोनानद्योः सङ्गमस्थले पाटलीग्रांदुर्गं निर्मितवान्। दुर्गं परितः नगरं प्रवृद्धम्। तच्च नगरं पाटलीपुत्रनाम्ना कुसुमपुरनाम्ना च आहूयते स्म। इदानीं तस्य नाम पाटना इति सञ्जातम् अस्ति।

पूर्वं मगधराज्यं नितरां प्रबलम् आसीत्। अतः एव भूमण्डलम् एव जेतुकामः ग्रीक्चक्रवर्ती अलेक्साण्डर् अपि एतस्य नगरस्य उपरि आक्रमणं कर्तुं न इष्टवान्। पाटलीपुत्रं राजधानीनगरम्। तत् केन्द्रीकृत्य बहवः राजानः राज्यशासनं कृतवन्तः। तेषु मौर्यः चन्द्रगुप्तः, तत्पौत्रः

## जम्बीरफलखादने नवविक्रमः

गिन्नीसुपुस्तके स्वनाम योजयितुम् इच्छन् कोयम्बत्तूरुप्रदेशीयः ३७ वर्षीयः एस्. पार्थसारथिः त्रीणि जम्बीरफलानि द्वादशधा विभज्य ११.८ सेकेण्ड् अभ्यन्तरे खादितवान्। एतेन नूतनं विक्रमं स्थापयन् सः वदति यत् इतः पूर्वम् एतद्विषये विक्रमं स्थापितवन्तं बाबी केम्पबर्यम् अहम् अतिक्रम्य गतः अस्मि इति।






They are Teddy, Wobbit, Father Hare, Jumbo and Bow Wow. The first few toys in the Cuddles collection from Chandamama. And the good news is that you can let them in at the front door. Just write to us and order the prankster(s) you fancy most. Within a month your friendly neighbourhood postman will knock on your door with a gift wrapped Cuddles — just waiting to be let loose. And this is just the beginning. For there's lot more excitement in store from the House of Chandamama.

# FIVE LITTLE PRANKSTERS WANT TO GET INTO YOUR HOME.

## A special offer for readers of Chandamama only.

Our way of saying yo
every bit as special.
Cuddles toy. At a pri
still more you can sa
become eligible for
12 issues and Rs.15









**A. WOBBIT:**
Size : 13.5 inches (height)
Price: Rs. 83.00
Add : Rs. 4.80 General Sales Tax for orders placed within Tamil Nadu.
Rs. 8.30 Sales Tax for orders placed outside Tamil Nadu.

**B. TEDDY:**
Size : 10.5 inches (height)
Price: Rs. 93.00
Add : Rs. 5.35 General Sales Tax for orders placed within Tamil Nadu.
Rs. 9.30 Sales Tax for orders placed outside Tamil Nadu.

**C. JUMBO:**
Size : 7 inches (height)
Price: Rs. 68.00
Add : Rs. 3.90 General Sales Tax for orders placed within Tamil Nadu.
Rs. 6.80 Sales Tax for orders placed outside Tamil Nadu.

**D. BOW WOW:**
Size : 6 inches (height)
Price: Rs. 45.00
Add : Rs. 2.60 General Sales Tax for orders placed within Tamil Nadu.
Rs. 4.50 Sales Tax for orders placed outside Tamil Nadu.

**E. FATHER HARE:**
Size : 6 inches (height)
Price: Rs. 25.00
Add : Rs. 1.45 General Sales Tax for orders placed within Tamil Nadu.
Rs. 2.50 Sales Tax for orders placed outside Tamil Nadu.

Look out for Mama Hare and Baby Hare in our next offer to complete the Happy Hare Family.

…ying you're very special to us is by making you an offer that's …pecial. The chance of being the very first people to own a … At a price that's — you guessed right — special! And there's … can save. On ordering any of the toys here, you automatically …le for discounts on subscription to Chandamama. Rs.6 off on … Rs.15 off on 24 issues.










Dear Chandamama,

I have read about your MAIL-A-TOY scheme and have had a good look at the Cuddles range.

Please send me (tick one or more):

☐ Wobbit ☐ Teddy ☐ Father Hare ☐ Jumbo ☐ Bow Wow

I also understand that I can avail a special discount if I subscribe to Chandamama. I would like to subscribe to Chandamama for —

☐ One year (Rs.30 instead of Rs.36)

☐ Two years (Rs.57 instead of Rs.72)

☐ Sorry, I'm not interested in the subscription offer.

Enclosed please find a Postal Order/Money Order for Rs.............. drawn in favour of Chandamama Toytronix Pvt Ltd.

CHANDAMAMA MAIL-A-TOY SCHEME

I look forward to receiving the toy(s) within a month. I understand that if I am not fully satisfied with the toy(s), I am entitled to a complete refund if I mail it/them back within a week of receiving it/them.

My name: .................................................. Date of birth: ..............................

Mailing address: ...........................................................................................

...........................................................................................................

What are my favourite:

Magazines/Comics : .......................................................................................

TV Programmes : .................................................. Toys ..............................

Pastimes : Reading/Toys/Games/TV/Video/Video games/Others : ..........................

CHANDAMAMA
·MAIL-A-TOY·
·SCHEME·

All you have to do is to fill the coupon alongside and mail it to us at Chandamama Toytronix Pvt Ltd, Chandamama Buildings, 188, N.S.K. Salai, Vadapalani, Madras 600 026. Within a month of our receiving your request, you will receive your Cuddles. Just in case you are not fully satisfied, we assure you a complete refund of the price if you mail the toy(s) back to us within a week.

CHANDAMAMA COLLECTION

# CUDDLES

**Chandamama Toytronix Private Limited,**
Chandamama Buildings,
188, NSK Salai, Vadapalani, Madras - 600 026.

Mudra:M:CT:3789

चक्रवर्ती अशोकश्च प्रसिद्धौ।

इदानीं पाटना बिहारराज्यस्य राजधानी। गयामण्डलस्य गयानगरं बुद्धगयानगरं च पवित्रं भावयन्ति जनाः। गयानगरे मगधविश्वविद्यालयः अस्ति इदानीम्।






## अपायात् रक्षितः बालः

स्विसर्ल्याण्ड्देशे मेगियार्कासारे पञ्चवर्षीयः कश्चन बालकः अनवधानवशात् पतितः। तत्समये तत्र केचन मज्जनकलाम् अभ्यस्यन्तः आसन्। ते त्रिंशत् निमेषान् यावत् प्रयत्नं कृत्वा ३० मीटर् अधः गतं तम् उपरि आनीतवन्तः। तत्समये तस्य श्वासोच्छ्वासस्य गतिः क्षीणा जाता आसीत्। किन्तु समीपस्थस्य वैद्यस्य चिकित्सया सः प्राणापायात् रक्षितः अभवत्। बालस्य मातापित्रोः तु एतेन अपरिमितः सन्तोषः।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. शेक्सपीयर् यस्मिन् वर्षे जातः तस्मिन् एव वर्षे जन्म प्राप्तवतः प्रसिद्धस्य आंग्लनाटकलेखकस्य नाम किम्?

२. सः कदा कथं मरणं गतः?

३. आत्महत्यार्थं निर्दिष्टः रोमनकविः कः?

४. तं तथा कः निर्दिष्टवान्? किमर्थं सः तथा कृतवान्?

५. भारतात् बहिः स्थितः सः देशः कः, यस्मिन् च तदीयया भाषया निर्मितं रामायणम् अस्ति?

६. सागा इत्यस्य कः अर्थः?

## उत्तराणि

### सः कः स्यात्?

ईसफ्।

### अपि भवान् जानाति?

१. पोर्चुगीसूजनाः।
२. अफेन्सो डि अल्बुकर्क्।
३. भरतात् पञ्चमः हस्तिनः।
४. १३३३ तमे वर्षे चीनादेशे। विविधैः प्रकारैः दश वर्षाणि यावत् तत्र भूकम्पः प्रवृत्तः।
५. अल्जिरियास्थं एलूक्वेड्नगरम्।
६. अलास्कस् सीलस् ५,००० मैल् तरणं कर्तुम् अर्हति।

### साहित्यज्ञानम्

१. क्रिस्टफर् मार्लोन्, १५६४ तमे वर्षे।
२. २९ तमे वयसि प्रकोष्ठे संस्थाप्य तं मारितवन्तः।
३. ल्यूकन्।
४. नीरोचक्रवर्ती। एतस्य विरुद्धं कुतन्त्रम् आचरितम् इत्यतः।
५. इण्डोनेषिया।
६. ऐस्ल्याण्ड्स्थाः मध्ययुगसम्बन्धिनः वचनग्रन्थाः इति।

# नेहरूकथा–११



गवर्नर् जनरल् रूपेण भारतम् आगतः इर्विन् यदा गान्धिवर्येण सह वार्तालापं कुर्वन् आसीत् तदा कश्चन युवकः रहस्यरूपेण नेहरू समीपम् आगतः। सः पृष्टवान् यत् यदा तयोः वार्तालापः समाप्यते तदा कारागारे स्थिताः भगतसिंहप्रभृतयः क्रान्तिकारिणः किं विमुक्ताः भवन्ति इति। सः युवकः एव चन्द्रशेखर अजाद्।

इतः द्वित्राणां सप्ताहानाम् अनन्तरं, इर्विन्-गान्धिचर्चा यदा प्रचलन्ती आसीत् तदा, अलहाबाद्-उद्याने आरक्षकाः चन्द्रशेखर अजाद् बन्धनार्थं प्रयत्नं कृतवन्तः। चन्द्रशेखरः भुशुण्ड्या द्वौ आरक्षकौ व्रणितौ कृतवान्। एतेन क्रुद्धाः आरक्षकाः चन्द्रशेखरं तत्रैव गोलकास्त्रप्रयोगेण मारितवन्तः।





इर्विन्-गान्धिवर्ययोः मध्ये कश्चन सन्धिः जातः। एतस्य फलरूपेण कांग्रेससंस्था असहकारान्दोलनं स्थगितवती। आंग्लशासनेन च कारागारस्थाः सहस्राधिकाः काङ्ग्रेस-पक्षीयाः विमोचिताः।



कारागारतः आगतान् देशभक्तान् जनाः महता आदरेण वैभवेन च स्वागतीकृतवन्तः। तत्र तत्र अभिनन्दनसभाः अपि प्रवृत्ताः। एतासु सभासु नायकाः वर्णितवन्तः यत् इर्विन्-गान्धिसन्धिः गान्धिवर्यस्य विजयं, शासनस्य पराजयं च द्योतयति इति। एतत् श्रुत्वा आंग्लसर्वकारीयाः नितरां कुपिताः।

कराचीनगरे कांग्रेस्समावेशः प्रवृत्तः। सरदारवल्लभभायी पटेल् एतस्य अध्यक्षः आसीत्। गुजरात्प्रदेशे जातः अयं महान् देशभक्तः इति राष्ट्रियनायकः इति च ख्यातः आसीत्। जनाः अपि तस्मिन् विशेषादरवन्तः आसन्। कराचीसम्मेलनं महता उत्साहेन आरब्धम्।





सीमाप्रदेशात् आगतः खान् अब्दुल् गफार् खान् अपि एतस्मिन् समावेशे नायकत्वेन परिगणितः। तस्य अनुयायिनः सर्वे रक्तं वस्त्रं धरन्ति स्म। ते कांग्रेस्पक्षे स्वनिष्ठां प्रदर्शितवन्तः।

वर्तुलपीठसमावेशे भागग्रहणार्थं गान्धीजी लण्डन्नगरं गतवान्। भारतीयसमस्यानां परिहारार्थम् एव एषः समावेशः आयोजितः आसीत् चेदपि ततः तृप्तिकरं फलं तु न प्राप्तम्।





भारतीयाः नायकाः अस्मदनुवर्तित्वं न अङ्गीकुर्वन्ति' इति जानन्तः आंग्लेयाः भारतीयानां शक्तिम् उन्मूलयितुं सङ्कल्पं कृतवन्तः। जवहरः मुम्बईनगरे रेलयानेन प्रयाणं कुर्वन् आसीत्। तदा आरक्षकाः अकस्मात् रेलयानं स्थगयित्वा जवहरं बन्दीकृतवन्तः।

१९४२ तमे वर्षे जनवरी चतुर्थदिनाङ्के गान्धीजी लण्डनतः प्रत्यागतः। सरदार् पटेल्, गान्धीजी इत्यादयः अपि बन्धने स्थापिताः। पौराधिकाराः शासनेन निषिद्धाः अभवन्। इदानीं स्वातन्त्र्यवीराणां शासनस्य च मध्ये विचारविनिमयः अपि स्थगितः अभवत्।





इतः केषाञ्चित् दिनानाम् अनन्तरम् अलहबादनगरे काचित् शोभायात्रा प्रवृत्ता। तस्याः शोभायात्रायाः नायिका आसीत्-जवहरस्य माता। आरक्षकाः शोभायात्रां स्थगितवन्तः। जवहरस्य मातुः महती बलहीनता आसीत् इत्यतः कश्चित् आसन्दम् आनीतवान्। वृद्धा नायिका आसन्दे उपविष्टवती।

अकस्मात् आरक्षकाणां वेत्रदण्डप्रहारः आरब्धः। जवहरस्य मातरं रक्षन्तं कार्यदर्शिनम् अन्यान् कांश्चन च आरक्षकाः बन्दीकृत्य नीतवन्तः। शोभायात्रां विच्छिन्नां कृतवन्तः। जवहरस्य मातरम् आसन्दात् पातितवन्तः च।





जवहरस्य माता भूमौ पतिता। कठोरहृदयाः आरक्षकाः दण्डेन तां ताडितवन्तः। तस्याः शिरसः रक्तधारा आगता। कारागारस्थः नेहरू एतां वार्तां श्रुतवान्। 'वृद्धा दुर्बला माता भूमौ पतिता सती रक्तसिक्ता अस्ति। एतादृशे सन्दर्भे मया अहिंसामार्गस्य अनुसरणं किं कर्तुं शक्येत?' इति आलोचयति जवहरः।

–(अनुवर्तते)



# त्रय: प्रश्ना:

अनुपमदेशं पूर्वं विक्रमसेन: नाम राजा पालयन् आसीत्। तस्य द्वे पत्न्यौ। ज्येष्ठपत्न्या: नाम वासन्ती इति। कनिष्ठपत्न्याश्च नाम माधवी इति। यद्यपि ते सपत्न्यौ तथापि ते द्वे अपि सहोदर्यौ इव प्रीत्या निवसत:। राजा तयो: उभयो: कृते अपि पृथक् पृथक् भवनम् उपकल्पितवान् आसीत्।

वासन्ती माधवी च सौन्दर्यवत्यौ विद्यावत्यौ चापि। माधवी वासन्त्या: अपेक्षया अपि चतुरमति:। सा स्वविनोदस्वभावेन अधिकां जनप्रियतां सम्पादितवती आसीत्।

विक्रमसेन: यथा शासने दक्ष: तथैव कविताप्रिय: अपि। स: तदा तदा सभायां समस्या: उपस्थापयति। योग्यस्य उत्तरस्य प्राप्त्या सन्तोषम् अनुभवति च। एतादृशेषु विषयेषु माधव्या: अपि आसक्ति: आसीत्। अत: राजा प्रतिदिनं राजसभायां प्रवृत्ता: घटना: माधवीं निवेदयन् तां सन्तोषयति स्म।

कदाचित् राजा तद्दिने राजसभायां यत् प्रवृत्तं तत् माधवीं निवेदितवान्। तदा माधवी राजानम् उक्तवती– "भवान् सर्वदापि चतुरोक्तिभि: सन्तोषं प्राप्नोति खलु? अत: अहम् अपि त्रीन् प्रश्नान् प्रष्टुम् इच्छामि। एते प्रश्ना: भवत: परीक्षार्थम् इति न। मनोविनोदार्थम् एतान् पृच्छामि, यदि भवत: अनुमति: स्यात्" इति।

"अस्तु, पृच्छतु तावत्" इति उत्साहेन उक्तवान् राजा।

"मम प्रथम: प्रश्न:– पति: केन प्रकारेण सौन्दर्यवर्णनं करोति चेत् पत्नी नितरां तुष्यति? इति। विद्यावती, अनुरागवती, विवेकिनी च पत्नी पत्या कृतं निन्दनं कदा



"भवतः यावत् बुद्धिमत्ता तावत् नास्ति मम। भवता एतेषां प्रश्नानाम् उत्तराणि इदानीम् एव वक्तव्यानि इति नास्ति। स्वयं चिन्तयित्वा, सभ्यान् पृष्ट्वा वा जानातु" इति हसन्ती उक्तवती माधवी।

'सभ्यान् पृष्ट्वा उत्तरं ज्ञात्वा वदतु' इत्यस्य कः अर्थः? 'भवान् एतेषाम् उत्तरं न जानाति' इत्येव खलु? माधव्याः एतादृशं वचनं श्रुत्वा राजा किञ्चिदिव खिन्नः। "अस्तु, पश्याम तावत्" इति उक्त्वा ततः निर्गतवान् सः।

पत्युः निर्गमनं पश्यन्ती मनसि एव हसन्ती मौनं स्थितवती माधवी। विक्रमसेनः ततः साक्षात् वासन्त्याः अन्तःपुरं गतवान्।

पत्युः मुखे दृश्यमानं गाम्भीर्यं दृष्ट्वा पृष्टवती वासन्ती– "प्रभो! मुखे म्लानता किमर्थम्? राजकार्ये अपरिहार्या समस्या कापि आगता वा?" इति।

"राजकार्ये समस्या न। भवत्याः भगिनी स्वप्रश्नैः मां चिन्तनकूपे पातितवती" इति उक्तवान् राजा।

तदा समाधानेन निःश्वसती वासन्ती पृष्टवती– "माधव्या प्रश्नाः पृष्टाः वा? के ते प्रश्नाः? किं तावद्गभीराः ते?" इति।

विक्रमसेनः माधव्या पृष्टान् त्रीन् प्रश्नान् अपि वासन्तीम् उक्तवान्।

तदा वासन्ती पृष्टवती– "अहम् एतेषाम् उत्तराणि वदामि वा?" इति।

अपमानकरं भावयति? – इति तु द्वितीयः प्रश्नः। स्त्री कदापि किं न सहते? – इति तृतीयः प्रश्नः" इत्येवं त्रीन् प्रश्नान् पृष्टवती माधवी।

राजा विक्रमसेनः पत्न्या पृष्टान् प्रश्नान् पुनः पुनः स्मरन् उत्तरस्य अन्वेषणं कृतवान्। उत्तररूपेण विविधाः विकल्पाः तु मनसि आगताः। किन्तु किञ्चिच्चिन्तनेन ज्ञायते स्म यत् ते सर्वे अर्थहीनाः इति। साररहितम् उत्तरम् उक्तं चेत् पत्न्याः निराकरणं श्रोतव्यं भवेत्। राजा एतत् न इच्छति। क्षणकालं यावत् चिन्तयित्वा पत्नीम् उक्तवान् राजा– "बुद्धिमती भवती कठिनान् एव प्रश्नान् उपस्थापितवती" इति।



"भवती एतेषां योग्यम् उत्तरं जानाति? तत् कथम्?" इति आश्चर्येण पृष्टवान् राजा।

"स्त्रियः हृदयं स्त्री एव ज्ञातुम् अर्हति। तेषां प्रश्नानाम् उत्तराणि अहं भवन्तं वदामि। तानि माधवीं श्रावयन् भवान् वदतु यत् एतानि मया एव विचिन्त्य उक्तानि इति" इति उक्त्वा वासन्ती त्रयाणाम् अपि प्रश्नानां योग्यानि उत्तराणि उक्तवती।

अनन्तरदिने सायङ्काले विक्रमसेनः माधव्याः अन्तःपुरं गत्वा उक्तवान्– "ह्यः त्रीन् प्रश्नान् पृष्टवती आसीत् खलु भवती? तेषाम् उत्तराणि वदामि वा?" इति।

"तेषाम् उत्तराणि स्वबुद्ध्या एव ज्ञातवान् वा भवान्?" इति उद्गच्छन्तं हासं निगृह्णती पृष्टवती माधवी।

"अथ किम्? चिन्तनेन सर्वं ज्ञातम्" इति गाम्भीर्येण उक्तवान् राजा।

"उत्तरं श्रावयतु तावत्" इति उक्तवती माधवी।

"भवत्याः प्रथमस्य प्रश्नस्य उत्तरम् एवम्– भवती रम्भा, भवती ऊर्वशी इति कथनस्य अपेक्षया अपि, भवती अमकसुन्दर्याः अपेक्षया अपि श्रेष्ठा इति अन्यया तोलयित्वा पतिः पत्न्याः प्रशंसां करोति चेत् पत्नी नितरां तुष्यति" इति उक्तवान् विक्रमसेनः।

"उचितम् उत्तरम्। द्वितीयस्य उत्तरं किम्?" इति पृष्टवती माधवी।

"पत्युः निरन्तरं निन्दनं सहमाना अपि पत्नी, सपत्नीनां स्नुषादीनां वा पुरतः पत्या अल्पं तर्जनं कृतं चेदपि तत् अपमानकरं भावयति। एतत् द्वितीयस्य प्रश्नस्य उत्तरम्" इति उक्तवान् विक्रमसेनः।

"अस्तु तावत्। तृतीयस्य उत्तरं श्रावयतु" इति उक्तवती माधवी।

"सहनशीला अपि पत्नी स्वस्य पुरतः पत्या क्रियमाणम् अन्यस्याः स्त्रियः श्लाघनं कदापि न सहते। एतत् तृतीयस्य प्रश्नस्य उत्तरम्" इति विजयगर्वेण उक्तवान् विक्रमसेनः।

"त्रीणि अपि उत्तराणि युक्तानि एव। चतुरमतिः मम अग्रजा सम्यक् एव

चिन्तितवती" इति हसन्ती उक्तवती माधवी।

तदा राजा आश्चर्येण स्तब्धः सन्– 'अग्रजायाः चातुर्यं किम् अत्र?" इति पृष्टवान्।

तदा माधवी उक्तवती– "प्रभो, सत्यस्य गोपनेन किम्? ह्यः भवान् म्लानवदनः सन् इतः निर्गतवान्। इतः साक्षात् वासन्त्याः अन्तःपुरं खलु गतवान् भवान्? म्लानतायाः कारणं तया पृष्टं स्यात् एव। भवता कारणम् उक्तम्। तदा तया योग्यम् उत्तरं श्रावितम्। एषा खलु वस्तुस्थितिः?" इति।

इतः परं गोपनेन किमपि प्रयोजनं नास्ति इति आलोच्य विक्रमसेनः पृष्टवान्– "भवत्या उक्तं सत्यम् एव। किन्तु भवत्या एतत्सर्वं कथं तर्कितम?" इति।

"ह्यः भवान् मां किम् उक्तवान्? 'बुद्धिमती भवती कठिनान् एव प्रश्नान् पृष्टवती' इति वदन् मम बुद्धिमत्तायाः उपहासं कृतवान्। उत्तरकथने यत् असामर्थ्यम् आसीत् ततः एषः उपहासः मुखात् निर्गतः इति अहं ज्ञातवती। अतः अद्य भवता उक्तानि उत्तराणि भवदीयानि न इति सहजतया ज्ञातं मया। एतादृशं योग्यम् उत्तरं वक्तुं सामर्थ्यं कस्य अस्ति, ऋते अग्रजायाः" इति मन्दहासपूर्वकम् उक्तवती माधवी।

"चतुरा भवती। ह्यः किञ्चित्कालं यावत् मनसि कालुष्यम् आसीत् इति तु सत्यम् एव। इदानीं तु भवत्याः बुद्धिमत्तां पूर्णेन मनसा अभिनन्दामि" इति वदन् राजा विक्रमसेनः स्वकण्ठे स्थितं रत्नहारं माधव्याः कण्ठे स्थापितवान्।

"विजयमालाम् एतां प्राप्तुम् अर्हा न अहम्, अपि तु मम अग्रजा वासन्ती" इति उक्तवती माधवी।

"ताम् अपि पुरस्करोमि एव अहम्। भवतीं तां च पत्नीरूपेण प्राप्तवान् यत् तेन अहं नितरां धन्यः जातः" इति तृप्त्या उक्तवान् विक्रमसेनः।





# कृष्णावतारः

बाणस्य नगरं परीक्षादृष्ट्या पश्यन् आसीत् कृष्णः। तावता तत्र आगतः नारदः कृष्णम् उक्तवान्– "दृष्टं खलु भवता? एतत् शोणपुरं पार्वतीसमेतः शिवः स्वयं पालयन् अस्ति। एतत् जानन् अपि भवान् अत्र यत् आगतः तत् तु आश्चर्यकरम् एव। कार्यसिद्धेः मार्गः कः इति भवता निपुणम् आलोचनीयम्। तं मार्गम् अहम् अपि न जानामि। जागरूकतावचनस्य कथनं मम कर्तव्यम् आसीत्। तत् कृतं मया" इति।

तदा कृष्णः मन्दहासपूर्वकम् उक्तवान्– "यत् करणीयं तत् कृतं भवता। इतः परं निश्चिन्तः भवतु। ईश्वरः एव सम्मुखम् आगतः चेदपि अहं भीतः न भवामि। आरब्धं कार्यं मध्ये परित्यज्य पलायनं कदापि न करोमि। एतत् मम व्रतम्" इति।

अनन्तरं कृष्णः नगरद्वारसमीपं गत्वा पाञ्चजन्यनामकं स्वकीयं शङ्खं वादितवान्। रणसङ्केतः अष्टसु दिक्षु अपि प्रतिध्वनितः अभवत्। एतस्मात् नादतः दिशः कम्पिताः अभवन्। जीवराशयः च स्तब्धाः।

युद्धसूचकं शङ्खनादं श्रुत्वा बाणस्य सैन्यं समुद्रे तरङ्गाः इव अग्रे आगतम्। कृष्णः, बलरामः, प्रद्युम्नः,गरुडः च तां सेनां लीलया सम्मुखीकृत्य नाशितवन्तः। बाणस्य सैनिकेषु अकस्मात् ये सजीवं स्थितवन्तः ते पलाय्य नगरं प्रविष्टवन्तः।

एवं धावतः आगच्छतः सैनिकान् दृष्ट्वा बाणः कोपेन उक्तवान्– "राक्षसवीराणां कुले जन्म प्राप्य, युद्धविद्यायां परिणताः



भवन्तः रणरङ्गात् एवं पलाय्य आगतवन्तः खलु? मन्त्री कुम्भाण्डः कुत्र गतः? अल्पं शत्रुं सम्मुखीकर्तुं न शक्तवन्तः खलु भवन्तः? प्रमथगणः कुत्र गतः? तिष्ठन्तु। प्रतिनिवृत्य रणरङ्गं गच्छन्तु" इति।

कुम्भाण्डः अपि अग्रे आगत्य सैनिकान् एवम् एव उक्तवान्। किन्तु तेनापि किमपि प्रयोजनं न जातम्। सैनिकाः तु पलायमानाः एव सन्ति।

स्वभक्तस्य बाणस्य एतादृशीं दुर्गतिं दृष्ट्वा शिवः नितरां कुपितः। सः सिंहैः कृष्यमाणं वृषभध्वजेन युक्तं रथम् आरुह्य नन्दिनं सारथित्वेन नियोज्य, कुमारस्वामिना, प्रमथादिगणेन च सह अट्टहासपूर्वकं रणरङ्गं प्रविष्टवान्। एवम् आगतं शिवं दृष्ट्वा बाणासुरस्य सैनिकाः सन्तोषं प्राप्य दूरात् पश्यन्तः स्थितवन्तः।

शिव-कृष्णयोः युद्धम् आरब्धम्। कृष्णं दृष्ट्वा कोपेन प्रज्वलन् शिवः शताधिकान् बाणान् कृष्णं लक्ष्यीकृत्य प्रयुक्तवान्। कृष्णः ऐन्द्रास्त्रेण तान् बाणान् मध्ये एव खण्डितवान्। ऐन्द्रास्त्रेण सहैव सहस्राधिकाः बाणाः शिवस्य रथम् आक्रम्य स्थितवन्तः। तदा शिवः आग्नेयास्त्रेण आत्मानं परितः अग्निज्वालाम् उत्पादितवान्। अग्निज्वालाः कृष्णेन प्रयुक्तान् बाणान् भस्मीकृतवत्यः। कृष्णं, बलरामं, प्रद्युम्नं, गरुडं च दग्धुं वेगेन अग्रे आगतवत्यः। एतावता कृष्णः वारुणास्त्रं प्रयुज्य अग्निज्वालाः शमितवान्। क्षणाभ्यन्तरे एतत्सर्वं प्रवृत्तम् आसीत्।

शिवः पुनरपि पञ्चषाणि घोराणि मन्त्रास्त्राणि प्रयुक्तवान्। कृष्णः प्रत्यस्त्रैः तानि निर्वीर्याणि कृत्वा अन्ते वैष्णवास्त्रं प्रयुक्तवान्। एतत् घोरम् अस्त्रं कथं सम्मुखीकरणीयम् इति अजानन् शिवः कोपेन ज्वलन् युगान्तकं पाशुपतास्त्रम् उन्नीतवान्। एतस्य दर्शनेन समग्रे प्रपञ्चे हाहाकारः उत्पन्नः। शिवस्य उद्देशं जानन् कृष्णः झटिति जृम्भकास्त्रं प्रयुक्तवान्। एतस्य कारणतः शिवः नितरां श्रान्तः अभवत्। तस्य मुखात् निरन्तरं जृम्भणानि आगच्छन्ति। तस्य हस्ततः धनुर्बाणादयः पतिताः।

एतस्मिन् समये बाणासुरः रणरङ्गम्

आगतवान्। शिवे शक्तिं चैतन्यं च पूरयितुं सः बहुधा प्रयत्नं कृतवान्। किन्तु सः सफलः न जातः। कृष्णः विजयसूचकं पाञ्चजन्यं वादयन् सर्वाः दिशः बधिरीकृतवान्।

एतत्सर्वं दृष्टवतः प्रमथगणीयानां कोपः नितरां प्रवृद्धः। ते स्वकीयैः आयुधैः प्रद्युम्नम् आवृतं कृतवन्तः। राक्षसाः अपि मायायुद्धम् आरब्धवन्तः। किन्तु प्रद्युम्नः सम्मोहन-विद्यया तान् सर्वान् मायावृतान् कृत्वा पातयित्वा आयुधानाम् आवरणं विच्छिद्य बहिः आगत्य परितः स्थितान् राक्षसान् सर्वान् मारितवान्।

अत्रान्तरे कुमारस्वामी युद्धात् पराङ्मुखं पितरं दृष्टवान्। सः झटिति अग्रे आगत्य पितुः स्थाने तिष्ठन् युद्धम् आरब्धवान्। सः कृष्ण-बलराम-प्रद्युम्नान् युगपत् एव सम्मुखीकुर्वन् तान् सर्वान् व्रणितान् कृतवान्। स्वयम् अपि व्रणितः जातः। कुपितः सः अन्ते ब्रह्मशिरोनामास्त्रं प्रयुक्तवान्।

कृष्णः स्वस्य सुदर्शनचक्रेण तत् अस्त्रं निर्मूलितवान्। तच्च चक्रं कुमारस्वामिनः समीपम् अगच्छत्। तावता लम्बादेवी नाम देवतास्त्री तत्र आगत्य कुमारस्वामिनं रणरङ्गात् उन्नीय गतवती।

स्वपक्षीयाः सर्वे एवं रणरङ्गात् यदा निवृत्ताः तदा बाणः 'मम बाहुबलस्य प्रदर्शनार्थं योग्यः अवकाशः प्राप्तः' इति भावयन् धावन् आगत्य कृष्णस्य पुरतः



स्थितवान्।

कृष्ण-बाणासुरयोः युद्धम् आरब्धम्। बाणस्य रथः आयुधानि च नष्टानि अभवन्। तदीयः ध्वजस्तम्भः अपि पतितः। कृष्णेन प्रयुक्तः कश्चन बाणः बाणस्य उरः विच्छिद्य निरगच्छत्। मूर्च्छितः बाणः शिथिलस्य रथस्य उपरि पतितवान्।

कृष्णस्य सुदर्शनचक्रात् बाणं रक्षयितुं शिवपार्वती च पुनरपि लम्बादेवीम् एव प्रेषितवन्तौ। लम्बादेवी बाणस्य पुरतः स्थितवती। पार्वती अपि अदृश्यरूपेण लम्बादेव्याः पार्श्वे स्थितवती। चक्रायुधं ते परितः भ्रमत् अतिष्ठत्।

कृष्णः पार्वत्याः आगमनं ज्ञातवान् एव। सः ताम् उक्तवान्– "देवि! किमर्थम्



एतादृशी कुयुक्तिः? मां न जानाति वा भवती? भवती पुरतः तिष्ठति चेदपि अहं शत्रुं सजीवं न त्यजामि। एतत् तु निश्चितम्'' इति।

तदा पार्वतीदेवी कृष्णं प्रार्थितवती– ''कृष्ण! भवतः सामर्थ्यम् अहं जानामि। तथैव करुणाशालिताम् अपि जानामि अहम्। भवन्तं सम्मुखीकर्तुं कोऽपि न शक्नोति इति तु सत्यम् एव। एषः बाणः मया पुत्रवत् वर्धितः। कुपुत्रो जायेत क्वचिदपि कुमाता न भवति इति आर्योक्तिं श्रुतवान् खलु भवान्? मम पुत्रं रक्षन् मां पुत्रशोकात् रक्षतु'' इति।

''देवि! भवत्याः प्रार्थना अङ्गीकृता मया। अभयं दीयते। किन्तु एषः सहस्रं बाहून् धरन् गर्वेण व्यवहरति। द्वौ बाहू विहाय अन्यान् सर्वान् बाहून् कर्तयामि चेत् एतस्य दर्पः अपगच्छेत्। भवत्याः योग्यः पुत्रः भवितुम् अर्हति एषः। अतः एतस्मिन् कार्ये प्रतिरोधं मा आचरतु कृपया'' इति उक्तवान् कृष्णः।

पार्वतीदेवी एतत् अङ्गीकृत्य लम्बादेवीम् किञ्चित् अपसर्तुं सूचितवती। पार्वतीदेव्या सह लम्बादेवी अपि अन्तर्हिता अभवत्।

कृष्णस्य आज्ञायाः अनुगुणं सुदर्शनचक्रं बाणस्य द्वौ बाहू शेषयित्वा अन्यान् सर्वान् बाहून् कर्तयित्वा स्वस्थानं प्रत्यागच्छत्।

एतावता अपि बाणस्य दर्पः न उपशान्तः। सः पुनरपि उत्थाय आक्रमणम् आरब्धवान्। पुनरपि बाणवर्षणं कृतं तेन। एतेन कुपितः कृष्णः बाणं लक्ष्यीकृत्य पुनरपि यदा चक्रायुधं प्रयोक्तुम् उद्युक्तः तदा शिवः सपरिवारं प्रत्यक्षीभूय कृष्णं प्रार्थितवान्– ''भोः कृष्ण! एतस्य रक्षकः अहम् अस्मि। एतं मारयन् भवान् मम अभयदानं निरर्थकं मा करोतु कृपया। मम अपमाननं भवति चेत् मम शक्तिः नश्यति। मम शक्तिनाशे च भवतः सुदर्शनचक्रम् अकिञ्चित्करं स्यात्। प्रपञ्चे उत्पाताः सम्भवेयुः। अतः शान्तः भवतु। दन्तहीनः सर्पः इव जातः अस्ति अयं बाणः। केवलं फूत्कर्तुं शक्नुयात् अयं, नान्यत् किमपि कर्तुम्। अतः कोपं संहरतु'' इति।

एतेन शान्तः कृष्णः बाणस्य मारणप्रयत्नं परित्यज्य शिवं स्तुवन् गरुडम् आरुह्य अनिरुद्धसमीपं गतवान्।

नन्दिकेश्वरः बाणं शिवस्य समीपं नीतवान्। शिवः स्वहस्तस्पर्शेन बाणस्य व्रणान् वेदनां च अपनीतवान्। तं कैलासे नन्दिनः यादृशं स्थानं तादृशे स्थाने नियुक्तवान्। बाणस्य नाम 'महाकालः' इति परिवृत्तम् अभवत्। ततः शिवः अदृश्यः अभवत्।

अनिरुद्धः नागास्त्रेण बद्धः आसीत् खलु? यदा गरुडः गतः तदा सर्वे नागाः बाणरूपं प्राप्य अधः पतितवन्तः।

तावता नारदः तत्र आगतः। चित्ररेखा अपि तत्र उपस्थिता। कृष्णः, बलरामः, प्रद्युम्नः च एकैकशः अनिरुद्धं प्रीत्या आलिङ्गितवन्तः। अनिरुद्धः तान् विनयेन नमस्कृतवान्।

मन्त्री कुम्भाण्डः सुमुहूर्तं निश्चित्य, विवाहार्थम् अपेक्षित सन्नाह कृत्वा मङ्गलद्रव्यैः सह आगत्य कृष्णं नमस्कृत्य – "कृष्ण! मां प्रसादेन अनुगृह्णातु कृपया। भवन्तम् अपृष्ट्वा उषानिरुद्धयोः विवाहार्थं सर्वं सज्जीकृतवान् अस्मि। यदि अपराधः, तर्हि क्षन्तुम् अर्हति" इति प्रार्थितवान्।

तदा कृष्णः– "भवता कोऽपि अपराधः न कृतः। भवान् स्वभावेन सज्जनः इति मया श्रुतम्। अतः भवान् एव बाणस्य एतत् राज्यं स्वीकृत्य धर्मेण परिपालयतु" इति उक्तवान्।

अनन्तरम् उषानिरुद्धयोः विवाहः सवैभवं सम्पन्नः। कृष्णः वधूवरौ शिवपार्वत्योः समीपं नीतवान्। वधूवरौ शिवपार्वती नमस्कृतवन्तौ। आदिदम्पती तौ वधूवरौ





आशिषा अनुगृहीतवन्तौ। पार्वती अनिरुद्धाय वाहनरूपेण बाणस्य मयूरम् एव दत्तवती।

कृष्णः यदा ततः प्रस्थितः तदा कुम्भाण्डः उक्तवान्– "कृष्ण! बाणस्य गोसमूहः वरुणाधीनः अस्ति। यादवकुलतिलकः गोपालः भवान् तं गोसमूहं स्वायत्तीकरोति चेत् वरं भवेत्" इति।

गोसमूहस्य वार्तां श्रुत्वा अपि कृष्णः तूष्णीं तिष्ठति किम्? सः तत्क्षणे एव बलरामेण, प्रद्युम्नेन च सह गरुडम् आरुह्य पश्चिमसमुद्रतीरं गत्वा तत्र तृणं चरन्तीः लक्षं धेनूः दृष्टवान्। धेनुषु प्रीतिः कृष्णस्य स्वभावः खलु? अतः सः गरुडात् अवतीर्य धेनूनां समीपं गतवान्। तावता ताः धेनवः समुद्रं प्रविश्य अदृश्याः अभवन्।

एतत् दृष्ट्वा निराशः कृष्णः गरुडसमीपं गत्वा– "मम प्रयत्नः किमर्थम् एवम् असफलः?" इति पृष्टवान्।

"किम् अन्यत्? वरुणस्य बाहुः युद्धार्थं स्फुरति इति भाति। इदानीं वरुणेन सह युद्धं विना न अन्या गतिः" इति उक्तवान् गरुडः।

"युद्धारम्भं भवान् एव करोतु" इति सूचितवान् कृष्णः। गरुडः पक्षौ वेगेन वीजयन् समुद्रजलम् आकाशं प्रेषितवान्। समुद्रस्य अधः स्थितः नागलोकः दृष्टिगोचरः जातः।

कृष्णः पाञ्चजन्यं वादयन् वरुणभवनस्य उपरि आक्रमणं कृतवान्। तत्क्षणे एव वरुणभटाः शङ्खनादं कुर्वन्तः षट्षष्टिं रथान् आरुह्य कृष्णं सम्मुखीकर्तुम् उत्साहेन अग्रे आगतवन्तः।

कृष्णेन सह आगतौ बलरामः, प्रद्युम्नः चापि युद्धे कृष्णस्य साहाय्यं कृतवन्तौ। कृष्णादीनां बाणप्रहारं सोढुम् अशक्ताः वरुणभटाः ततः पलायनं कृतवन्तः।

'कृष्णस्य एतावत् औद्धत्यं वा?' इति वदन् वरुणः कोपावेशेन युद्धार्थम् आगतवान्। वरुण-कृष्णयोः युद्धम् आरब्धम्। एतस्मिन् युद्धे कृष्णः वैष्णवास्त्रं यदा प्रयोक्तुम् उद्युक्तः तदा भीतः वरुणः शरणं प्रार्थयन् नमस्कारं कृतवान्।

"वरुण! शरणं प्रार्थयति चेत् किं प्रयोजनम्? भवतः वशे स्थिताः बाणस्य धेनूः

समर्पयत् प्रथमम्" इति उक्तवान् कृष्णः।

"देव! एवं तु न आदेष्टव्यं भवता। 'यावत् मम प्राणाः भवन्ति तावत् एताः धेनूः रक्षिष्यामि' इति बाणाय वचनं दत्तवान् आसम्। किम् अहं प्रतिज्ञाभङ्गं कुर्याम्? भवान् एव विचार्य उचितम् आदिशतु" इति उक्तवान् वरुणः।

'धेनवः वरुणस्य वशे एव भवन्तु' इति आलोच्य कृष्णः दिव्यास्त्रं प्रतिसंहृतवान्। वरुणः कृष्णस्य करुणां स्तुवन्, तं तदनुचरान् च सत्कृत्य प्रेषितवान्।

वरुणलोकात् प्रत्यागतः कृष्णः बलरामेण, प्रद्युम्नेन, अनिरुद्धेन च सह गरुडम् आरुह्य स्वनगरं प्रत्यागतवान्। नगरसमीपे अवतीर्य आगमनसूचकं पाञ्चजन्यं वादितवान्। पाञ्चजन्यस्य नादं श्रुत्वा सर्वे यादवप्रमुखाः सन्तोषेण कृष्णस्य स्वागतार्थं सपरिवारम् आगतवन्तः।

कृष्णः नगरात् बहिः उद्याने विश्रान्तिसुखम् अनुभवन् आसीत्। इन्द्रादयः देवाः अपि तत्र आसन्। यादवाः तान् सर्वान् रथे उपवेश्य सवैभवं नगरस्य अन्तः नीतवन्तः।

विजयं सम्पाद्य प्रत्यागतवतः कृष्णस्य स्वागतार्थम् अल्पे एव काले सर्वत्र तोरणानि निर्मितानि आसन्। मार्गाः अलङ्कृताः आसन्। लाजाः मार्गे विकीर्णाः आसन्। मार्गम् उभयतः स्थित्वा जनाः विशालीकृताभ्यां नेत्राभ्यां कृष्णं पश्यन्तः आसन्। कृष्णः शोणपुरे अग्नीन् जितवान् यत्, शिवस्य रौद्रतां शमितवान् यत्, पार्वतीं पुत्रभिक्षया अनुगृहीतवान् यत्, बाणेन महाकालत्वं प्राप्तं यत्, कृष्णेन कुम्भाण्डः अनुगृहीतः यत्, तत्सर्वं परस्परं वदन्तः आसन् जनाः। अप्रयत्नेन कर्णपटम् आगच्छन्तीः एताः कथाः शृण्वन् मन्दहासपूर्वकम् अग्रे गतवान् कृष्णः।

कृष्णस्य अनुज्ञां प्राप्य इन्द्रादयः देवाः प्रतिनिवृत्ताः। उषानिरुद्धौ स्वकीयं नूतनं भवनं प्रविष्टवन्तौ। कृष्णः अपि स्वभवनं प्रविष्टवान्।





# वनदेवतानुग्रहः

वरदपुरे पूर्वं वल्लभः नाम कश्चन काष्ठानि सङ्गृह्य विक्रीय जीवति स्म। कदाचित् उषःकाले सः परशुं स्कन्धेन वहन् अरण्यं प्रति प्रस्थितवान्। तदा तस्य पत्नी उक्तवती– ''श्वः अस्माकं पुत्र्याः जन्मदिनम्। अतः किञ्चित् अधिकं काष्ठं सङ्गृह्य नगरे विक्रीय रमणीयां शुकपुत्तलिकां क्रीत्वा आगच्छतु'' इति।

''अस्तु तावत्'' इति अङ्गीकारं प्रदर्श्य अरण्यं गतवान् वल्लभः।

किन्तु अरण्ये बहुधा अटनं कृतं चेदपि तेन काष्ठयोग्यः शुष्कः वृक्षः न दृष्टः। 'इतःपरम् अपि अटनं यदि क्रियेत तर्हि सायङ्कालतः पूर्वम् अदरपोषणार्थं यावत् आवश्यकं तावत् काष्ठम् अपि सङ्ग्रहीतुं न शक्येत' इति आलोच्य सः आर्द्रम् एव कञ्चित् वृक्षं छेत्तुम् उद्युक्तः।

अपरस्मिन् क्षणे तीक्ष्णः प्रकाशः तस्य पुरतः प्रत्यक्षः अभवत्। तस्मात् प्रकाशात् आगता वनदेवता वल्लभम् उक्तवती– ''भोः, क्षणं तिष्ठतु। भवान् एतस्मिन् अरण्ये स्थितम् अद्वितीयं चन्दनवृक्षं कर्तयन् अस्ति इति जानाति वा? भवता अन्यत्र कोऽपि वृक्षः एव न दृष्टः वा?'' इति।

''अम्ब! शुष्कः वृक्षः कोऽपि न दृष्टः मया। अतः एतस्य छेदनार्थम् उद्युक्तः। अद्य मया मम पुत्र्याः निमित्तम् उपायनरूपेण शुकपुत्तलिका नेतव्या। तदर्थम् अधिकं धनं सम्पादनीयम्। यदि एतं चन्दनवृक्षं कर्तयेयं तर्हि अधिकं धनं प्राप्येत खलु?'' इति उक्तवान् वल्लभः।

''पुत्र्यै दातुं शुकपुत्तलिकां खलु इच्छति भवान्? अहं रमणीयतया वक्तुं समर्थं सजीवं शुकम् एव दास्यामि। प्रत्युपकाररूपेण भवता एतस्य चन्दनवृक्षस्य छेदनप्रयासः परित्यक्तव्यः'' इति वदन्ती वनदेवता



एकवारं करताडनं कृतवती।

तावता कुतश्चित् कश्चन सुन्दरः शुकः आगत्य वनदेवतायाः स्कन्धे उपाविशत्। वनदेवता प्रीत्या शुकस्य शिरः स्पृष्ट्वा तं शुकं वल्लभाय दत्तवती।

वल्लभः शुकं सन्देहपूर्वकं पश्यन् वनदेवतां पृष्टवान्– "एषः सुमधुरं वदति इत्येतत् सत्यं वा?" इति।

तदा शुकः एव– "वनदेवतायाः वचने अविश्वासः प्रकटितः चेत् भवतः नेत्रे दृष्टिहीने स्याताम्। अतः जागरूकः भवतु" इति अवदत्। वनदेवता ततः अदृश्या अभवत्।

वल्लभः शुकेन सह गृहं गतवान्। तदा गृहे तस्य पुत्री शुकपुत्तलिका आवश्यकी इति वदन्ती रुदती मातरं पीडयन्ती आसीत्।

यदा वल्लभः गृहस्य अन्तः गतवान् तदा शुकः वल्लभपुत्रीम् अवदत्– "भोः पश्यतु, शुकः अहम् आगतः अस्मि। उत्तमाः बालाः रोदनं न कुर्वन्ति। भवती उत्तमबालिका खलु? आगच्छतु, क्रीडाव तावत्" इति।

शुकं दृष्ट्वा, तदीयं वचनं च श्रुत्वा वल्लभस्य पत्नी पुत्री च आश्चर्यचकिते। अल्पे एव काले शुकस्य वल्लभपुत्र्याः च स्नेहः जातः। शुकः बहुविधाः कथाः वदति स्म। वल्लभपुत्री यदा शयनं करोति तदा अपि शुकं स्वपार्श्वे स्थापयति स्म। तावती प्रीतिः शुके।

वल्लभपत्नी एतस्य अपूर्वस्य शुकस्य विषये प्रतिवेशिनीः साभिमानम् उक्तवती। शुकं द्रष्टुं बहवः वल्लभगृहम् आगतवन्तः।

एतत्सर्वं दृष्ट्वा वल्लभपत्नी पतिम् उक्तवती– "भोः, वनदेवतायाः अनुग्रहतः अस्माभिः एषः शुकः प्राप्तः। भवान् एतं शुकं नीत्वा जनसम्मर्दयुतस्य मार्गस्य पार्श्वे उपविशतु। यः शुकेन सह वार्तालापं कर्तुम् इच्छति ततः एकं रूप्यकं स्वीकरोतु। एतेन प्रभूतं धनं सम्पादयितुं शक्येत" इति।

वल्लभः पत्न्याः वचनस्य विरोधं कर्तुं न अर्हति। अतः सः मौनेन पत्न्याः वचनम् अङ्गीकृतवान्।

अनन्तरदिने यदा सः शुकं नेतुम् उद्युक्तः तदा तस्य पुत्री उच्चैः रोदनं कृतवती। तदा

वल्लभपत्नी पुत्रीं बलात् आकृष्य नीत्वा प्रकोष्ठे स्थापयित्वा प्रकोष्ठं कीलितवती।

सम्भाषणसमर्थस्य शुकस्य वार्ता ग्रामे सर्वत्र प्रसृता आसीत् एव। अतः बहवः शुकेन सह वार्तालापं कर्तुम् इच्छन्तः वल्लभसमीपम् आगतवन्तः। तैः दत्तात् शुल्कात् वल्लभः प्रभूतं धनं सम्पादितवान्।

तस्मिन् दिने मृगयां समाप्य राजधानीं प्रति प्रस्थितः राजा तेन मार्गेण आगतवान्। एकत्र सम्मिलितान् जनान् दृष्ट्वा सः भटान् आज्ञापितवान् यत् तत्र किं प्रवर्तते इति दृष्ट्वा आगच्छन्तु इति। दृष्ट्वा आगताः भटाः महाराजं सम्भाषणसमर्थस्य शुकस्य वार्तां निवेदितवन्तः।

एतत् श्रुत्वा राजा अधिकारमदेन भटान् आज्ञापितवान्– "अपूर्वाणि वस्तूनि सर्वाणि राज्ञः मम समीपे भवेयुः। किन्तु उद्धतः एषः अपूर्वं शुकं स्वसमीपे स्थापितवान् अस्ति। एतस्य अपराधस्य निमित्तं तं दशभिः कशाताडनैः दण्डयित्वा शुकं मम समीपम् आनयन्तु" इति।

भटाः राजाज्ञानुसारं वल्लभं दशभिः कशाताडनैः दण्डयित्वा शुकं वशीकृत्य आनीय राज्ञे दत्तवन्तः।

असहायः वल्लभः रोदनं कुर्वन् गृहं गत्वा प्रवृत्तं समग्रं पत्नीं निवेदितवान्। पुनः द्वादशानां दिनानाम् अनन्तरं सः यथापूर्वं चलितुं समर्थः जातः।

अनन्तरं तस्य पत्नी तम् उक्तवती– "वनदेवतायाः साहाय्यं यावत् भवति तावत्





चिन्ता किमर्थम्? भवान् पुनः अपि वनं गत्वा चन्दनवृक्षस्य छेदनार्थम् उद्युक्तः भवतु। तदा वनदेवता प्रत्यक्षा भवति। 'अद्य मम पत्न्याः जन्मदिनम्। तस्यै दातुं अपूर्वः कण्ठहारः आवश्यकः' इति तां वदतु'' इति। कोणे स्थापितं परशुं पत्युः हस्ते स्थापितवती च।

पत्न्याः वाक्यं वेदवाक्यं भावयन् वल्लभः अरण्यं गतवान्। चन्दनवृक्षस्य छेदनार्थं परशुम् उन्नीतवान् चापि। यदा वनदेवता प्रत्यक्षा जाता तदा वल्लभः पत्न्या यथा सूचितं तथैव उक्तवान्।

तदा वनदेवता आकाशे हस्तं चालयन्ती कान्त्या शोभमानम् एकं सुवर्णमयं चन्द्रहारं सृष्ट्वा वल्लभाय दत्तवती। वल्लभः तं हारं नीत्वा गृहं गतवान्, पत्न्यै हारं दत्तवान् चापि। वल्लभपत्नी तं हारं धृत्वा ग्रामे सर्वत्र अटित्वा सर्वाभ्यः हारं प्रदर्श्य आगतवती।

एषा हारप्राप्तिवार्ता केनचित् चोरेण श्रुता। सः रात्रौ वल्लभगृहं प्रविश्य वल्लभपत्न्याः कण्ठे स्थितं हारं बलात् आकृष्य अपहृत्य पलायितवान्। एतेन वल्लभपत्न्याः कण्ठे व्रणः जातः। वेदनां सहमाना सा प्रातःकालपर्यन्तं रोदनं कुर्वती स्थितवती।

प्रातः सा पतिम् अनुरोधपूर्वकम् उक्तवती– ''वनदेवतया दत्तः' शुकः चन्द्रहारः च अस्माकं दौर्भाग्यकारणतः नष्टः। अतः अद्य पुनरपि अरण्यं गच्छतु। अद्य मम जन्मदिनम् इति वदन् वाणिज्यारम्भार्थं गोणीमितं सुवर्णं प्रार्थयतु। तया दत्तं सुवर्णं नीत्वा वयं नगरं गच्छेम। तत्र उत्तमम् एकं गृहं क्रीत्वा तत्र निवसेम। एतादृशे कुटीरे सदा चोरभीतिः अस्ति एव'' इति।

एतत् अङ्गीकृत्य वल्लभः परशुम् उन्नीय अरण्यं गतवान्। यदा तेन चन्दनवृक्षस्य छेदनार्थम् उद्युक्तं तदा वनदेवता प्रत्यक्षा जाता। वल्लभः वाणिज्यार्थं धनं प्रार्थितवान्। वनदेवता वृक्षं कम्पितवती। तदा वृक्षशाखाभ्यः सुवर्णनाणकानि पतितानि। तानि सङ्गृह्य गोण्यां पूरयित्वा महता कष्टेन तानि वहन् गृहं प्रति प्रस्थितवान् वल्लभः।

एवं गमनसमये उभौ राजभटौ सम्मुखम्

आगतवन्तौ। तौ दृष्टवतः वल्लभस्य हृदये कम्पनम् उत्पन्नम्। तदा सन्देहं प्राप्य राजभटौ तर्जनस्वरेण पृष्टवन्तौ– "भोः, गोण्यां किम् अस्ति?" इति।

तदा वल्लभः– "अरण्यतः प्राप्तानि फलानि सन्ति अत्र" इति उत्तरं दत्तवान्।

भटाः गोणीम् उद्घाट्य दृष्टवन्तौ। तत्र सुवर्णनाणकानि प्राप्य तौ आश्चर्यम् अनुभवन्तौ, तं महाराजसमीपं नीतवन्तौ।

'मया चौर्यं न कृतम्' इति बहुधा उक्तवान् वल्लभः। तथापि राजा– "चोराग्रेसरस्य वचनं कथं वा विश्वासार्हं भवेत्? भवान् महाचोरः एव स्यात्। तथापि भवत्तः भाण्डारं प्रति अधिकं धनम् आगतम् इत्यतः अल्पेन दण्डेन दण्ड्यते भवान्" इति उक्त्वा, दश कशाताडनानि, मासद्वयं यावत् कारागारवासं च आज्ञापितवान्।

कारागारवासं समाप्य गृहं प्रत्यागतवान् वल्लभः। तदा तस्य पत्नी कोणे स्थापितं परशुं तस्मै यच्छन्ती उक्तवती– "अद्य अरण्यं गत्वा 'मम पुत्र्याः जन्मदिनम्' इति वनदेवतां वदतु। तया यत् दीयते तत् आनयतु च" इति।

किन्तु एतस्मिन् सन्दर्भे वल्लभः चन्दनवृक्षयुतं तं प्रदेशं न गतवान्। अन्यं प्रदेशं गत्वा बहूनि शुष्ककाष्ठानि सङ्गृह्य नगरे विक्रीतवान्। एवं प्राप्तेन धनेन गृहार्थम् आवश्यकानि वस्तूनि, पुत्र्याः निमित्तं शुकपुत्तलिकां च क्रीत्वा गृहम् आगतवान्।

"किम् इदम्? केवलं शुकपुत्तलिका आनीता खलु भवता? वनदेवता किमपि न दत्तवती वा?" इति पृष्टवती वल्लभपत्नी।

"एषु दिनेषु आगतस्य झञ्झावातस्य कारणतः सः चन्दनवृक्षः समूलं पतितः। अतः वनदेवता न दृष्टा मया। सा कुत्र गता इति न ज्ञायते। तथापि चिन्ता तु नास्ति। अरण्ये शुष्काणां वृक्षाणाम् अभावः नास्ति। काष्ठसङ्ग्रहणे मम सामर्थ्यम् अपि अस्ति एव" इति शान्तस्वरेण पत्नीम् उक्तवान् वल्लभः।





# औदार्यम्

द्विसहस्रात् वर्षेभ्यः पूर्वं चीनादेशे सो-पू-तावूनामकः कश्चन वृद्ध आसीत्। सः प्रख्यातः पण्डितः आसीत्। किन्तु सः सर्वथा निर्धनः। यदि राजा, कश्चित् धनिकः वा तदीयं पण्डित्यं दृष्ट्वा सत्कृतवान् स्यात् तर्हि तस्य दारिद्र्यम् अपगच्छेत्। किन्तु तादृशं भाग्य न प्राप्तम् एतेन।

दूरस्थस्य चूराज्यस्य राजा पण्डितान् विशेषादरेण पश्यति स्म। स्वयं सः अपि पण्डितः आसीत्। 'तस्य राज्ञः समीपं गत्वा पाण्डित्यं प्रदर्श्य सम्मानन प्राप्नोतु' इति बहवः तावूम् उक्तवन्तः। हितचिन्तकानां वचनं तिरस्कर्तुम् अनिच्छन् तावू चूराज्यं गन्तुं निश्चितवान्। स्वसमीपे विद्यमानं अल्पं धनं, वस्त्राणि च स्वीकृत्य पादाभ्यां सः चूराज्यं प्रति प्रस्थितवान्।

चूराज्यं सुदूरे अस्ति। शतशः योजनानि यावत् गन्तव्यम्। तत्रापि पर्वतमार्गः तु नितरां दुस्तरः। तथापि तावू अग्रे गतवान्। एवं गमनसमये ग्रीष्मऋतुः सम्प्राप्तः।

'कुत्रापि कानिचन दिनानि यावत् विश्रान्तिं स्वीकृत्य प्रयाणम् अनुवर्तनीयम्' इति आलोच्य तावू मार्गे प्राप्तस्य कस्यचित् गृहं गतवान्। तस्य गृहस्य स्वामिनः नाम याङ्गू-चियावू-आयः इति।

आयः तावूम् आदरेण स्वागतीकृत्य सत्कृतवान्। अतिथिरूपेण आगतः तावू पण्डितः इति ज्ञातवतः आयस्य महान् सन्तोषः जातः आसीत्। आयस्य समीपे स्थितानां प्राचीनग्रन्थानाम् अवलोकनेन एव तावू ज्ञातवान् यत् एषः आयः न सामान्यः, अपि तु मम अपेक्षया अपि श्रेष्ठः पण्डितः इति।

"चूदेशस्य राजा पण्डितान् आदरेण सत्करोति इति मया श्रुतम्। भवान् अपि मया सह आगत्य तं पश्यतु तावत्" इति आयं

सूचितवान् तावू।

आयः एतत् अङ्गीकृत्य ग्रीष्मकालोचितं वस्त्रं, किञ्चित् धनं च स्वीकृत्य प्रस्थितवान्। उभौ अपि सहैव प्रयाणं कृतवन्तौ। किन्तु दौर्भाग्यवशात् मार्गे झञ्झावातः आगतः। एतौ लियाङ्ग्-पर्वतश्रेण्यां झञ्झावातेन पीडितौ जातौ। झञ्झावातः तावान् तीव्रः आसीत् यत् एकं पदम् अपि तत्र स्थापयितुं न शक्यते। वृद्धस्य तावूवर्यस्य तु नितरां शोचनीया स्थितिः। सः आयं कम्पमानस्वरेण उक्तवान्– "भोः, मम अन्तिमक्षणः सन्निहितः इति भाति। अहं चूदेशं द्रष्टुं न शक्नोमि। मम ग्रीष्मकालोचितं वस्त्रं भवान् धरति चेत् अग्रे गन्तुं शक्नुयात्। चूराजं द्रष्टुं चापि शक्नुयात्। अतः मम वस्त्रं भवान् धरतु" इति।

किन्तु आयः एतत् सर्वथा निराकृतवान्। "जीवनं मरणं चापि आवयोः सहैव भवतु। भवन्तम् अत्र त्यक्त्वा अहं चूदेशं गन्तुं न इच्छामि। भवतः वस्त्रं स्वीकुर्वन् अहं भवतः मरणस्य कारणं भवितुं न इच्छामि" इति उक्तवान् आयः।

"भोः, भवान् इतोऽपि तारुण्ये अस्ति। अहं तु श्मशानमार्गे अस्मि। अतः चूराजस्य सम्माननप्राप्त्या अपि मम तु विशेषलाभः कोऽपि नास्ति। अन्यच्च भवान् मम अपेक्षया अपि पाण्डित्येन श्रेष्ठः। अतः भवान् मम वस्त्राणि स्वीकृत्य प्राणान् रक्षन् चूराजं पश्यतु" इति अनुरोधपूर्वकम् उक्तवान् तावू। तथापि आयः न अङ्गीकृतवान्।



अनन्तरं हिमपाततः रक्षणार्थं तौ गुहां प्रविष्टवन्तौ। "कुत्रापि अल्पानि काष्ठानि प्राप्तानि चेत् तानि ज्वालयित्वा शैत्यनिवारणं कर्तुं शक्येत" इति उक्तवान् ताव्। आयः काष्ठानाम् अन्वेषणार्थं ततः बहिः गतवान्। किन्तु यावत् सः प्रत्यागतवान् ततः पूर्वं ताव् स्वस्य वस्त्राणि गुहायां स्थापयित्वा गुहायाः बहिः स्थिते हिमकूपे आत्मानं पातितवान् आसीत्। आयः प्रत्यागत्य गुहायां वस्त्राणि दृष्टवान्। दिग्भ्रान्तः सः बहिः आगतवान्। तावता हिमकूपे ताव्शवः प्लवमानः तेन दृष्टः।

परोपकारार्थं प्राणत्यागं कृतवतः ताव्वर्यस्य औदार्यं पुनः पुनः स्मरन् अश्रूणि स्रावितवान् आयः।

अनन्तरं सः ताव्शवम् उन्नीय गुहायाः अन्तः स्थापयित्वा, ताव्वस्त्राणि धृत्वा सकुशलं चूदेशं प्राप्तवान्।

चूराजः आयस्य पाण्डित्यं दृष्ट्वा नितरां सन्तुष्टः अभवत्। तम् आस्थानकविस्थाने नियोजितवान् सः। प्रभूतं धनं, वस्तूनि, वाहनं चापि दत्तवान्।

किन्तु एतादृशम् अपूर्वं सम्माननं प्राप्य अपि आयः अश्रूणि स्रावयति। आश्चर्यचकितः राजा आयं दुःखस्य कारणं पृष्टवान्।

तदा आयः – "प्रभो! भवान् मम पाण्डित्येन तुष्टः सन् एवं मां सम्मानयन् अस्ति। किन्तु ताव्वर्यस्य औदार्यं स्मरामि चेत् अहम् आत्मानं तृणसमं भावयामि" इति वदन् ताव्वृत्तान्तम् आद्यन्तं श्रावितवान्।

एतत् श्रुत्वा चूराजः आश्चर्यं खेदं चापि अनुभवन् आयेन सह तां गुहां गतवान्। नमस्कारपूर्वकं गौरवं प्रदर्श्य शवस्य अन्त्यसंस्कारं विधिवत् निर्वर्तितवान् सः। तत्रैव कश्चन शवस्तूपः अपि निर्मितः।

आयः प्रतिवर्षं तां गुहां गत्वा अश्रुतर्पणं समर्प्य आगच्छति स्म। एतदनन्तरकाले ताव्शवस्तूपः चीनादेशे कवि-पण्डितानां यात्रास्थलं सञ्जातम्।





# कार्यसिद्धिः

रामपुरनामके ग्रामे कृष्णचन्द्रः रामभद्रः च निवसतः। तौ सम्भूय एकं कृषिक्षेत्रं क्रीतवन्तौ। क्षेत्रस्य क्रयणे उभयोः अपि समभागः आसीत्, सत्यं, किन्तु तत्र कृषिकरणे तु सः समभागः न आसीत्। यतः कृष्णचन्द्रः कृषिं सर्वथा न जानाति। 'दैवेन दीयते' इति चिन्तयन् सः सदा देवस्य ध्यानं करोति।

रामभद्रः तथा न। सः कृषिकार्यं सम्यक् जानाति। अतः सः सदाऽपि क्षेत्रे कार्यं कुर्वन् भवति। भूमेः सज्जीकरणं, सस्यानाम् आरोपणं, जलसेचनं, गोभरयोजनं, कुतृणानाम् अपसारणम् इत्यादिषु तस्य समयः व्ययितः भवति।

तस्मिन् वर्षे क्षेत्रे उत्तमा फलसमृद्धिः प्राप्ता। शाक-फल-पुष्पादयः ततः प्राप्ताः। तेषां विक्रयणेन भूरि धनम् अपि प्राप्तम्। तस्य विभागविषये तु समस्या उत्पन्ना। समभागं तु उभौ अपि न इच्छतः।

रामभद्रः वदति– "अहम् अहोरात्रं क्षेत्रे परिश्रमेण कार्यं कृतवान्। अत एव एतादृशी फलसमृद्धिः प्राप्ता अस्ति। अतः अधिकः भागः मह्यम् आवश्यकः" इति।

कृष्णचन्द्रः वदति– "अहं निश्चलमतिः सन् अहोरात्रं भगवतः ध्यानं कृतवान्। दैवानुग्रहात् एव फलसमृद्धौ आधिक्यं दृष्टम्। अतः मया अधिकं प्राप्तव्यम्" इति।

एवं किञ्चित्कालं यावत् तयोः वादः प्रवृत्तः। अन्ते तौ ग्रामाधिकारिणः समीपं गत्वा स्वस्वपक्षं समर्थयन्तौ न्याय्यं विभागं प्रार्थितवन्तौ।

तयोः कथनं श्रुत्वा ग्रामाधिकारी उक्तवान्– "अहं भवन्तौ एकं लघुकार्यं सूचयामि। प्रातःकालाभ्यन्तरे तत् कार्यं समाप्य आगन्तव्यम्। अनन्तरम् अहं न्याय्यं मार्गं सूचयिष्यामि" इति।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

अनन्तरं ग्रामाधिकारी एकैकस्मै अपि गोणीमितं व्रीहिं दत्त्वा– "व्रीहिं कुट्टयित्वा तण्डुलं सज्जीकृत्य आगन्तव्यम्" इति सूचितवान्।

व्रीहिगोणीं स्वीकृत्य तौ स्वगृहं गतवन्तौ।

भगवद्भक्तः कृष्णचन्द्रः व्रीहिगोणीं प्रकोष्ठे कोणे स्थापयित्वा भगवन्तं ध्यायन् प्रार्थितवान् यत् भगवन्! व्रीहितः तण्डुलं निर्माय ददातु इति। एवं ध्यायन् एव सः निद्रावशः अभवत्।

रामभद्रः तु प्रातःकालपर्यन्तम् अपि व्रीहिं कुट्टयन् तण्डुलं तुषं च पृथक्कृतवान्।

मध्यरात्रसमये ग्रामाधिकारी तयोः गृहयोः समीपं गतवान्। कृष्णचन्द्रस्य गृहे व्रीहिकुट्टनस्य कोऽपि शब्दः न श्रूयते स्म। रामभद्रस्य गृहे तु व्रीहिकुट्टनस्य शोधनस्य च शब्दः श्रूयते स्म।

अनन्तरदिने रामभद्रः कृष्णचन्द्रः च गोण्या सह ग्रामाधिकारिणः समीपम् आगतवन्तौ। उभौ अपि गोणीम् उद्घाट्य प्रदर्शितवन्तौ। रामभद्रेण आनीतायां गोण्यां तण्डुलः तुषः च पृथक्कृत्य बद्धः आसीत्। कृष्णचन्द्रस्य गोण्यां तु व्रीहिः तथैव आसीत्। कृष्णचन्द्रः लज्जया शिरः अवनमय्य स्थितवान्।

"ज्ञातं खलु कृष्णचन्द्र, परिश्रमेण केवलं कार्यं सिध्यति इति। भवान् केवलं भगवन्तं प्रार्थितवान्। दैवेन दातव्यम् इति ये वदन्ति ते कापुरुषाः। स्वशक्त्या कार्यं कृतं चेत् एव दैवानुग्रहः अपि सिध्यति, न तु केवलया प्रार्थनया। यदि भवान् रामभद्रेण सह परिश्रमेण कार्यं कृतवान् स्यात् तर्हि इतोऽपि अधिकः लाभः अलभिष्यत। यदा भवता अपि परिश्रमः क्रियते तदा समभागः प्राप्यते। इदानीं कृष्णचन्द्रः यावत् ददाति तावत् विना विरोधं स्वीकरणीयं भवता" इति उक्तवान् ग्रामाधिकारी।

एतदनन्तरं कृष्णचन्द्रः अपि रामभद्रेण सह कार्यं कर्तुम् आरब्धवान्। अतः तयोः मध्ये पुनः कदापि विवादः न उत्पन्नः।





## अतिमहत् बीजम्

सियुचिलीद्वीपे प्राप्तं कोकोडिमेर् बीजम् एव प्रपञ्चे अतिमहत् बीजम् इति श्रूयते। एतस्य भारः ४० पौण्ड्। (= १८ क्रि.ग्रा.)



## तरक्षुः मार्जारजातीयः

तरक्षुः मार्जारजातीयः चेदपि मार्जारः इव पादं मुष्टिरूपेण पुटीकर्तुं न शक्नोति। अन्यच्च मार्जारः अवकाशं प्रतीक्षमाणः अकस्मात् लक्ष्यस्य उपरि आक्रमणं यथा करोति तथा तरक्षुः न करोति। सः प्राणिनः अनुधावनं कुर्वन् गत्वा तं गृह्णाति।

## स्नेहशीलः पक्षी

आफ्रिकादेशस्थः वीवर्स् बर्ड् नामकः पक्षी शुष्कैः तृणैः सामाजिकगृहसदृशं नीडं निर्माति। प्रथमं छादिसदृशम् आवरणं निर्माति सः। तत् प्रकोष्ठसदृशान् भागान् निर्माति।



# हृदयाघातः

| | | |
|---|---|---|
| पतिः - | भोः, नागेशस्य हृदयाघातः इति श्रूयते। | Look here, I heard Nagesh had a heart attack! |
| पत्नी - | कस्य? ग्रामप्रमुखपुत्रस्य नागेशस्य वा? | Which Nagesh? Village head man's son Nagesh? |
| पतिः - | आं, तस्यैव। | Yes, the same man. |
| पत्नी - | कदा? | When? |
| पतिः - | ह्यः सायङ्काले पञ्चवादने। | Last evening, at 5 O' clock. |
| पत्नी - | मध्यवयस्कः सः दृढकायः एव आसीत् खलु? ह्यः मध्याह्ने अत्र आगत्य घण्टां यावत् जल्पनं कृत्वा तक्रं पीत्वा गतवान् आसीत् सः। | He is just middle-aged and well built! He was here speaking to me for an hour yesterday after-noon and went back after taking a cup of butter milk! |
| पतिः - | हृदयाघातः यस्य कस्यापि यदा कदापि वा भवितुम् अर्हति। | Anyone may suffer a heart attack at any time. |
| पत्नी - | नागेशः इदानीं गृहे अस्ति, उत चिकित्सालये। | Is Nagesh at home or in the hospital now? |
| पतिः - | आघातसमनन्तरम् एव वैद्यः आनीतः। वैद्येन सूचितं यत् अविलम्बेन चिकित्सालयं प्रति नेतव्यः इति। अतः सः चिकित्सालयं प्रति नीतः अस्ति। | As soon as he had the attack the doctor was brought in. The doctor's advice was that he should be taken to the hospital without delay. So he was taken to the hospital. |
| पत्नी - | प्राणापायस्तु न भवेत् खलु? | No danger to his life isn't it? |
| पतिः - | न स्यात् इति भावयामि। एतावता किमपि सुस्पष्टं तु न ज्ञातम्। | I hope there is no danger. We have no clear information yet. |

* *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां मार्च्-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **अपरिमितं कौशलं स्रष्टा सृष्टस्य नरस्य।**

द्वितीयचित्रम् - **अनितरसाध्यं कौशलं जगतः स्रष्टुः देवस्य।**

प्रेषकः - श्री एं. स्वामिनाथन्, ओरियण्टल् प्रौढशाला, तञ्जावूरु-६१३००९

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| शब्द | Meaning |
|---|---|
| अङ्कम् - | Lap |
| अन्तर्हितः - | Disappeared |
| अवकरः - | Rubbish |
| उपहासः - | Ridicule |
| करताडनम् - | Clap |
| कापुरुषः - | A bad man |
| कुट्टनम् - | Pounding |
| कुतृणम् - | Weed |
| कौमुदी - | Moonlight |
| क्रयणम् - | Buying |
| क्षेपणी - | Space ship |
| खण्डितवान् - | Rejected |
| गृध्रः - | Vulture |
| जम्बीरफलम् - | Lemon |
| जृम्भणम् - | Yawn |
| तरक्षुः - | Cheetah |
| तुषः - | Husk |
| निर्झरी - | Mountain stream |
| पदकम् - | Pendant |
| परशुः - | Axe |
| परिहासः - | Fun |
| पुत्तलिका - | Doll |
| भुषुण्डी - | Gun |
| मातुलः - | Maternal uncle |
| मिहिका - | Fog |
| म्लानता - | Fading |
| लाजाः - | Smoked grain |
| वाति - | Blows |
| विसंज्ञा - | Unconscious |
| | Woman |
| व्रीहिः - | Paddy |
| शवस्तूपः - | Grave |
| शिरोभ्रमणम् - | Giddiness |
| शृगालः - | Fox |
| शोभायात्रा - | Procession |
| सन्धिः - | Agreement |
| सपत्नी - | Co-wife |
| स्कन्धः - | Shoulder |
| स्तन्यम् - | Mother's milk |
| * * | * * |

*

